पात्री, भर्जनपात्री, पुरोडाशपात्री, इडापात्री, दारुपात्री, यजमानपात्री, पत्नीपात्री, पूर्णपात्रम्, प्रणीतापात्रम्, प्रोक्षणीपात्रम्, फलीकरणपात्रम्, मदन्ती, द्रोणकलशः ; इति स्थाल्यादिपात्राणि षोडश ॥

तेषु तावदियं स्थाली शततृष्णा भवति ॥

### आज्यस्थाली

तत्र—साऽऽज्यस्थाली यस्यां पवित्रमन्तर्द्धाय स्रुक्‌ पूरणार्थमाज्यं गृह्यते । सा च तैजसी वा मृण्मयी वा द्वादशांगुलविस्तीर्णा प्रादेशोच्चा विधीयते । यथाकामं वाज्यस्थाल्याः प्रमाणं भवति ॥

### चरुस्थाली

चरुस्थाली च तथैव भवति । अथवा मृण्मय्यौदुम्बरी वा दृढा नातिबृहन्मुखी तिर्य्यगूर्ध्वं च समिन्मात्रा कार्य्या । इह प्रकरणे स्थाल्यादिकं सर्वमेव मृण्मयं पात्रं कुलालचक्रघटितमासुरं देवकर्म्मायोग्यं विज्ञेयम् । हस्तघटितमेव तु दैविकं भवति ॥

### अन्वाहार्यस्थाली

सा चान्वाहार्य्यस्थाली, यस्यां स्थाल्यां अन्वाहार्य्य ओदनः श्रप्यते । सा यथेच्छं तरकार्य्या ॥

### पिष्टोद्वपनी

सा पात्री पिष्टोद्वपनी ; यस्यां गार्हपत्याधिश्रितायां पिष्टानि समुप्यन्ते ॥

### पिष्टपात्री

पिष्टपात्री द्वादशांगुला चतुरस्रा विपुला च भवति । सैव हविर्द्धानपात्रीत्यप्युच्यते ॥

भर्जनपात्री भर्जनार्थमपेक्षितं मृण्मयं पात्रम् ॥

### पुरोडाशपात्री

पुरोडाशपात्री समचतुरस्रा वर्त्तुलेन खातेनोपेता । पुरोडाशपात्रमप्युच्यते तद्बृहच्चेत् ॥

### इडापात्री

इडापात्री चारत्निमात्रा वैकङ्कती स्यादित्येके । आश्वत्थं पदपरिमितायामबिलवक्रं चतुरंगुलपरिणाहं चतुरंगुलदण्डं पञ्चविंशतिपलं चेडापात्रमित्यन्ये । हुतहविःशेषादवदाय इडापात्रे स्थाप्यमानो हविर्भाग इडा । तदाधारत्वादिदमिडापात्रमित्युच्यते ॥

### दारुपात्रम्

दारुपात्रमिडापात्रतुल्यम् । तच्च केनचिच्चिह्नेनेडापात्रात् कृतभेदं संपाद्यते। पक्वान् पुरोडाशान् कपालेभ्य उद्वास्य मन्त्रेणाज्योपस्तरणं कृत्वा कृतोपस्तरणस्थाने तत्रैव दारुपात्रे पुरोडाशान् स्थापयित्वा हविरासादनकाले वेद्यामासादयन्ति। तत्पात्र-स्थानामेव च पुरोडाशानां यागकाले प्रधानहोमार्थं, ब्रह्मभागार्थं, यजमानभागार्थं, स्विष्टकृदर्थं, प्राशित्रार्थमिडापात्रे नीत्वा चतुर्धाकरणार्थं चावदानं क्रियते इति बोध्यम्॥

### यजमानपात्री पत्नीपात्री च

अथ यजमानपात्री पत्नीपात्री च यजमान तत्पत्न्योः प्राशनार्थं यथारुचि प्रकल्पिते भवतः॥

### पूर्णपात्रम्

अथ यावताऽन्नेन भोक्तुः पूर्णा तृप्तिः संभाव्यते, तावद्भिर्व्रीहिभिर्यवैर्वा पूर्णं पात्रं पूर्णपात्रम्। व्रीह्याद्यन्नमुष्टीनां षट्पञ्चाशेन शतद्वयेन पूर्णं पूर्णपात्रमित्याहुः॥

### प्रणीतापात्रम्

प्रणीता प्रणयनम्, आश्वत्थं वारणं वा प्रादेशमात्रमष्टांगुलबिलं चतुरंगुलदण्डं पात्रम्। तेन प्रणीतानाम्न्य आपो नीयन्ते। "प्रस्थमात्रोदकग्राही प्रणीता चमसो भवेदि"त्याहुः॥

### प्रोक्षणीपात्रम्

अथ प्रोक्षणीपात्रम्। पाणिमात्रं वैकङ्कतं हंसमुखप्रसेकं त्वग्बिलं चतुरंगुलं च कार्य्यम्॥

### फलीकरणपात्रम्

पुरोडाशचरुसम्बन्धिव्रीह्यादीनुलूखले मुसलेनावहत्य शूर्पेण निस्तुषीकरोति। तत्र ये तुषादयः पतन्ति ते फलीकरणशब्देन व्यपदिश्यन्ते। यागानन्तरं फलीकरणाख्यानां व्रीह्यादितुषाणां जुह्वा चतुर्गृहीतेनाज्येन सह दक्षिणाग्नौ होमो विधीयते। तस्मात् ते तुषादयः कस्मिंश्चिदश्वत्थमये पात्रे यागसमाप्तिपर्य्यन्तं संरक्ष्यन्ते। तत्पात्रं फलीकरणपात्रमित्युच्यते॥

### मदन्ती

अथ भर्जनपात्राधिश्रयणकाले यज्जलपात्रमधिश्रितं भवति। तत्रत्यं जलं मदन्तीत्युच्यते। मदन्तीनामिका आपो यस्मिन् पात्रे संताप्यन्ते तत्पात्रमपि लक्षणया मदन्तीत्युच्यते॥

द्रोणकलशः

अथ द्रोणकलशः पलशतग्राही पारिप्लवाकृतिः कार्य्यः । जुहूसदृशे महापुष्करे द्वे पात्रे द्रोणकलशाविस्याहुः ।

इति स्थाल्यादिपात्राणि ॥

## चमसाः १०

यजमानचमसः, ब्रह्मचमसः, होतृचमसः, उद्गातृचमसः, आग्निध्रचमसः, प्रशास्तृचमसः पोतृचमसः, नेष्टृचमसः, अच्छावाकचमसः, ब्रतशंसिचमसः; इत्येतानि चमसपात्राणि दश ॥

सर्वे चैते चमसाः विकङ्कतमयाः पलाशमयाः वटमया अन्यकाष्ठमया वा श्लक्ष्णास्त्वग्बिलाः कार्य्याः । तेषां दण्डाश्चतुरङ्गलाः; स्कन्धो द्व्यङ्गुलः; विस्तारश्चतुरङ्गुल इत्येके । द्व्यंगुलदण्डाश्चतुरङ्गुलखाताश्चतुरङ्गुलविस्तृता दशाङ्गुलदीर्घाः षडङ्गुलोच्छ्रायाश्चमसाः कार्य्या इत्यपरे । तेषां दशविधानां दण्डेषु विशेषा भवन्ति । तद्यथा— यजमानस्य दण्डः पृथुविस्तीर्णाग्रः कार्य्यः । ब्रह्मणश्चतुरस्रोऽल्पदण्डः । होतुर्मण्डलः । उद्गातुस्त्र्यस्रिः । आग्नीध्रस्य मयूखकः; तीक्ष्णाग्रो मयूखकः । प्रशास्तुरवतष्टः; अधोभाग वक्रोऽवतष्टः । पोतुरग्रे विशाखी । नेष्टुर्विगृहीतः । अच्छावाकस्य रास्नायुक्त उपरिवक्रः । ब्रह्मणाच्छंसिनोऽयमुपरिवक्रः इति ।

इति दश चमसाः ॥

## ग्रहाः ४०

सोमस्य ग्रहाश्चत्वारिंशद्भवन्ति । ते यथा—उपांश्वन्तर्यामौ द्वौ; उपांशुसवन एकः ऐन्द्रवायवः मैत्रावरुणः, आश्विनः इति द्विदेवत्यास्त्रयः, शुक्रामन्थिनौ द्वौ; आग्रयणोक्थ्यध्रुवास्त्रयः ; पूतभृत्, आधवनीय इति द्वौ; ऋतुग्रहा द्वादश ; ऐन्द्राग्नः, वैश्वदेवः—इति द्वौ; मरुत्वतीयास्त्रयः ; माहेन्द्र एकः, आदित्यः सावित्र—इति द्वौ ; वैश्वदेवः, पात्नीवतः, हारियोजन—इत्येते त्रयः ; अंशुरदाभ्यः इति द्वौ; दधिग्रहः, षोडशी—इति द्वौ । इत्थं चत्वारिंशत् । तत्रादितः षट्त्रिंशदग्निष्टोमीयाः । अंश्वादयस्तु चत्वारोऽत्यग्निष्टोमीयाः । अतएव च तथा विभागेन मन्त्रवर्णकं भवति—

षट्त्रिंशांश्च चतुरः कल्पयन्तश्छन्दांसि च दधत आ द्वादशम् । यज्ञं विमाय कवयो मनीषा ऋक्सामाभ्यां प्र रथं वर्त्तयन्ति (६ । ६ । १७ । २) (१० । १० । ११४ । ६)

अथवा सवनाऽनुसारेणैते द्रष्टव्याः । तत्र उपांशुः, उपांशुसवनः, अन्तर्यामः— इति त्रयः । ऐन्द्रवायवः, मैत्रावरुणः, आश्विन—इति त्रयः । शुक्रः, मन्थी इति द्वौ । आग्रायणः, उक्थ्यः—ध्रुवः, इति त्रयः । पूतभृत्, आधवनीयः—इति द्वौ । ऋतुग्रह-

स्त्वेकः । ऐन्द्राग्नः, वैश्वदेवः—इति द्वौ ॥ इत्येते षोडश ग्रहाः प्रातःसवनीयाः ॥ शुक्रा-मन्थिनौ, आग्रयणः, मरुत्वतीयाः, उक्थ्यः, माहेन्द्रः—इत्येतेऽष्टौ मध्यन्दिनसवनग्रहाः । आदित्यः, दधिग्रहः, सावित्रः, वैश्वदेवः, पात्नीवतः, हारियोजनः—इति षट्सायसवनीयाः ॥

औदुम्बरं चतुःस्रक्ति दधिग्रहपात्रम् । रास्नाचाहितं पात्रमैन्द्रवायवम् । पिलका-चिह्नितं मैत्रावरुणम् । द्विकोणं पात्रमाश्विनम् । बैल्वं शुक्रपात्रम् । वैकङ्कतं श्लक्ष्णं मन्थिपात्रम् । औदुम्बरं चतुःस्रक्ति अंशुपात्रम् । औदुम्बरं श्लक्ष्णमदाभ्यम् । न्यग्रोधकाष्ठनिर्म्मितान्यतिग्राह्याणि । इतराणि तु पात्राणि नैयग्रोधान्यौदुम्बराणि वा कार्य्याणि । तानीमानि दधिग्रहादीनि प्रादेशमात्राण्युलूखलाकाराणि एकतो मुखानि वायव्यानि सप्तदशपात्राणि । ऋतुपात्रे तु द्वे उभयतोमुखे कार्य्ये ॥

सौत्रामण्यां सुराग्रहणार्थं पलाशन्यग्रोधाश्वत्थकाष्ठनिर्म्मितानि त्रीणि प्रादेश-मात्राण्युलूखलाकाराण्यूर्ध्वमुखानि पात्राणि सुराग्रहा उच्यन्ते । तादृशान्येवान्यानि त्रीणि पात्राणि फलेग्रहैर्यज्ञियस्य पलाशादिवृक्षस्य काष्ठैर्निर्म्मितानि पयोग्रहा नाम ॥

## अथोपयोजनपात्राणि २६

प्राशित्रहरणम्, शृतावदानम्, मेक्षणम्, दर्वी, आकर्षफलकम्, कङ्कतम्, धृष्टिः, उपवेषः, अभ्रिः, कूर्चम्, षडवत्तम्, परिधयः, श्रपणी, शूलम्, पशूखा, अन्तर्द्धानकटः, वेदः, वेदपरिवासनम्, पवित्रम्, प्रोक्षणी, विधृतिः, प्रस्तरः, बर्हिः, जूना, योक्त्रम्, इध्मः, इध्मप्रव्रश्चनः, शाखा, विषाणम्, आसन्दी—इत्येवमादीन्युपयोजनपात्राणि कर्मभेदाद् बहुधा भिद्यन्ते ॥

### प्राशित्रहरणम्

प्राशित्रहरणं खादिरं वैकङ्कतं वा प्रादेशमात्रमादर्शाकारं, चमसाकारं, गोकर्णा-कारं वा चतुरङ्गुलदण्डयुक्तं कार्य्यम् । हुतशेषहविर्भागो ब्रह्मणे देयः प्राशित्रम् । तदनेनाह्रियते तस्मात् प्राशित्रहरणम् ॥

### शृतावदानम्

शृतावदानं वैकङ्कतं प्रादेशमात्रदीर्घं पृथुवक्त्रमङ्गुष्ठपर्वमात्रं तीक्ष्णाग्रं कार्य्यम् । शृतमन्नमनेनावद्यते तस्मात् शृतावदानम् ।

### मेक्षणम्

मेक्षणमिध्मजातीयमिध्माद्धप्रमाणं वैकङ्कतं प्रादेशमात्रं कार्य्यम् । आश्वत्थमर-त्निप्रमाणमग्रभागे चतुरङ्गुलचतुरस्रफलकयुक्तं मूलतो दण्डयुक्तं मेक्षणमित्यन्ये । तच्च भर्जनपात्र्यां समुप्तस्य पिष्टस्य मदन्तीभिरद्भिः संमेलनकरणादावुपयुज्यते । चरु-पाकोपयुक्तं तु तच्चरुमेक्षणमुच्यते ॥ उक्तं च—

"इध्मजातीयमिध्माद्ध प्रमाणं मेत्तणं भवेत ।
वृत्तं चाङ्गुष्ठपृथ्वग्रमवदानक्रियात्तमम् ॥" इति ॥

दर्वी

मेक्षणसदृशो दर्वी भवति । साऽरत्निमात्रा वारणी तुर्य्यांशाधिकपुष्करा हस्ताकारा द्व्यङ्गुलपृथ्वग्रा सर्पफणा कृत्यग्रा च कार्य्या ॥ ४ ॥

आकर्षफलकम्

अथाकर्षफलकं धनुराकृति हस्तमात्रं सर्पफणाकाराग्रं खादिरं वैकङ्कतं वा कार्य्यम् ॥

कङ्कतानि

कङ्कतानि तु त्रिदन्तीनि वारणानि भवन्ति ॥

धृष्टिः

धृष्टिरपि मेक्षणसदृशी भवति । सा च कपालोपधाने गार्हपत्यादङ्गारोद्धरणादौ चापयुज्यते । तेनात्युष्णमपि द्रव्यं सहसा ग्रहीतुं प्रगल्भते तस्मात् धृष्टिः ।

उपवेषः

उपवेषोऽपि धृष्ट्याकारः प्रादेशमात्रः पालाशो वत्सापाकरणशाखायाः पर्णानि छित्वा विनिर्मितो भवति । अरत्निमात्रः खादिरो वैकङ्कतो वा हस्ताकार उपवेष इत्येके । स हि सांनाय्यसंस्कारकाले गार्हपत्याङ्गाराणामुदग्दिशि निरूहणादावुपयुज्यते धृष्टिवदुपवेषः ॥ ८ ॥

अभ्रिः

अभ्रिररत्निप्रमाणा खादिरा वैकङ्कती वारणी वौदुम्बरी वा तीक्ष्णमुखा कार्य्या । काष्ठकुद्दालोऽभ्रिः । तस्याः शास्रं दशाङ्गुलं कार्य्यम् ॥

कूर्चः

कूर्चः कुशमयो बाहुमात्रो मकाराकारः । मलिनद्रव्यमलापकर्षणादावुपयुज्यते कूर्चः ॥

षड्वर्त्तम्

षड्वर्त्तं तु वारणनिर्म्मितं वैकङ्कतं वा षडङ्गुलप्रमाणं चतुरस्रमुभयतः खातं कार्य्यम् ॥

परिधयः

परिधयस्तु श्रैपर्णा बाहुमात्रा अपुष्कराः कार्य्याः ॥

श्रपण्यौ

अथ श्रपण्यौ श्रैपर्ण्यौ हस्तमात्रे भवतः ॥

शूलम्

शूलं तु हस्तमात्रं यस्य कस्यचित्तरोर्यज्ञियस्य क्रियते ॥

पशूखा

अथ पशूखा मृन्मयी, लौही, ताम्रमयी वा स्यात् ॥

अन्तर्धानकटः

अन्तर्धानकटस्तु आश्वत्थो वैकङ्कतो वा द्वादशाङ्गुलोऽर्द्धचन्द्राकृतिः किञ्चिदुच्छ्रितशीर्षो भवति । यदा गार्हपत्येऽध्वर्युः पत्नीसंयाजैः प्रचरति तदा तत्राहूतानां देवपत्नीनां तिरोधानेनाऽऽस्थानायोपयुज्यते सोऽन्तर्धानकटः ॥

वेदः

वेदस्तु दर्भमुष्टिरुच्यते । यो हि प्रदक्षिणावेष्टश्च द्विगुणः कृतः प्रादेशमात्र उपविष्टवत्सजानुसदृशसंपन्नः प्रच्छिन्नाग्रः स्यात् । स च समन्त्रके वेदिसंमार्जनाद्युपयुज्यते तस्माद्वेदः ॥

वेदपरिवासनानि

अथ योऽयं प्रच्छिन्नाग्रो वेद उक्तस्तस्य यान्यग्राणि पूर्वं छिन्नानि तानि वेदपरिवासनान्युच्यन्ते ॥

पवित्रम्

पवित्रं स्वनखच्छिन्नं साग्रं प्रादेशमात्रं द्विदलं समपरिणाहं मन्त्रसंस्कारयुक्तं दर्भद्वयम् । तेन प्रोक्षणादिप्रयोगाः क्रियन्ते, तस्मात् पवित्रम् । अत्र द्विदलत्वमावश्यकम्, दर्भद्वयं तु नावश्यकम् । एकस्यापि दर्भस्य पवित्रत्वात् । अतएव—"समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे करोति" इति ब्राह्मणवचने द्विवचनं संगच्छते । कर्मप्रदीपेऽप्येवमेवाह ॥

प्रोक्षण्यः

व्रीह्यादिप्रोक्षणार्थमग्निहोत्रहवण्यां गृहीता आपः प्रोक्षण्यः ॥ २० ॥

विधृतिप्रस्तरबर्हींषि

विधृतिप्रस्तरबर्हींष्यपि वेदपवित्रवद्दर्भमुष्टीनां नामानि । दर्शपौर्णमासे चैतान्युपयुज्यन्ते । तत्र वेद्यां तावद् द्वौ दर्भावुदगग्रौ निधीयेते, तयोर्विधृतिसंज्ञा ॥

अथ चतस्रो दर्भमुष्टयश्छिद्यन्ते । तत्र प्रथमा दर्भमुष्टिर्मन्त्रसंस्कृता, तयोर्विधृत्योरुपरि प्रागग्रा स्थाप्यते । तत्र च जुहूर्निधीयते स प्रस्तर उच्यते ॥

अन्यास्तु तिस्रो मुष्टयो वेद्यास्तरणार्था बर्हींषि । तत्र चास्तृते बर्हिषि हवींषि पात्राणि च निधीयन्ते । तदित्थं दर्भाणामेवावस्थाविशेषादेताः समाख्या भवन्ति—वेदः, पवित्रं, विधृतिः, प्रस्तरः, बर्हिरिति ॥

"यज्ञवास्तुनि मुष्टौ च स्तम्बेदर्भवटौ तथा।
दर्भसंख्या न विहिता विष्टरास्तरणेषु च ॥"

यत्तु—"पञ्चभिर्नवभिर्वापि साद्र्द्धद्वितयवेष्टितम्।
ओंकारेणैव मन्त्रेण द्विजः कुर्य्यात् कुशद्विजम्।
पञ्चाशद्भिः कुशैर्ब्रह्मा तदर्द्धेन च विष्टरः ॥"

इत्येवमादिभिः क्वचिद्दर्भवटु ब्रह्मविष्टरादिनिर्म्माणे कुशसंख्याऽभिधीयते, तदनुग्रहमात्रम् न तु नियम इति बोध्यम् ॥

जूना

जूनापि दर्भेणैव संपाद्यते। दर्भत्रयं गृहीत्वा प्रदक्षिणमावेष्ट्य तदन्तेऽन्यद्दर्भत्रयं मूलेन संयोज्य वेष्टनेन ग्रथितमिव कृत्वा ततः प्राग्वत् प्रदक्षिणमावेष्ट्य तदन्ते पुनरन्यद्दर्भत्रयं प्राग्वत् करोति तेनास्य मध्ये सन्धित्रयं जायते तद्दर्भसूत्रं द्विगुणं कृत्वा तदन्ते ग्रन्थिः कार्य्या। सा जूना भवति। जूना यज्ञे द्विविधाऽऽख्यायते—बर्हिः संनहनं, चेध्मसंनहनं च। बर्हिषां बन्धनोपयुक्तं बर्हिः संनहनम्। एवमिध्मनामिध्मसंनहनम्। तयोरुभयोर्लौकिकी संज्ञा भवति जूनेति ॥

योक्त्रम्

अथ योक्त्रं मुञ्जमयं संनहनम्। कर्म्मकालेऽध्वर्य्युप्रेषित आग्नीध्रो मन्त्रपूर्वं येन वेष्टनगुणेन त्रिगुणितेन पत्नीं कटिदेशे संनह्यति स गुणो योक्त्रम्।

इध्मानि

अथेध्मानि। बर्हिःसंभरणानन्तरमध्वर्य्युः स्थापितकाष्ठप्रदेशं गत्वाऽसिदेन श्वपशुना वा तूष्णीमिध्मं छिनत्ति। तान्येकविंशतिसंख्याकानि काष्ठानि गृह्यन्ते सोऽयमेकविंशतिदारुकः स एव 'इध्म' शब्देनाच्यते। तानीध्मानि द्वेधा विभज्यन्ते—परिधयः समिधश्चेति। आहवनीयस्य पश्चाद्दक्षिणत उत्तरतश्च प्रथममेखलोपरि स्थापनार्थं मेखलापरिमितायामं काष्ठत्रयं परिधिशब्देनाच्यते। पुरस्तात्त्वाहवनीयस्य सूर्य्यपरिधित्वेन मनसा क्लृप्तः। अथान्यान्यष्टादशकाष्ठानि- प्रादेशमात्राणि समिधः। समिल्लक्षणं छन्दोगपरिशिष्टे यथा—

"नाङ्गुष्ठादधिका कार्य्या समित् स्थूलतया क्वचित् ॥
न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥ १ ॥
प्रादेशान्नाधिका न्यूना न तथा स्याद् द्विशाखिका ॥
न सपर्णा न निर्वीर्य्या होमेषु न विजानता" ॥ २ ॥

मरीचिः—"विशीर्णा विदला ह्रस्वा वक्राः ससुषिराः कृशाः ॥

दीर्घाः स्थूला घुणैर्दुष्टाः कर्मसिद्धिविनाशकाः ॥ ३ ॥
आगमाः समिधो देयास्ताश्चाऽकामेष्वपाटिताः ॥
काम्येषु च सवल्कार्द्रा विपरीता जिघांसत" ॥ ४ ॥ इति ॥
एताश्च यज्ञियवृक्षाणामेव स्युः । ते यथा—
"पालाशाश्वत्थन्यग्रोधप्लक्षवैकङ्कतोद्भवाः ॥
अश्वत्थोदुम्बरौ बिल्वश्चन्दनः सरलस्तथा ॥
शालश्च देवदारुश्च खदिरश्चेति याज्ञिकाः" ॥ इति ॥

तत्रैतासामष्टादशानां समिधां द्वे आहवनीयायतनस्यान्तर्दक्षिणोत्तरयोर्भागयोरुदगग्रे रोपणार्थं भवतः । एकमनुयाजार्थम् । पञ्चदश सामिधेन्यर्थानि । कचित्तु विकृतीष्ट्यादिषु सामिधेनीवृद्धौ अधिका अपि समिधो गृह्यन्ते । कचिन्न्यूना अपीत्यूह्यम् । प्रकृतीष्टौ त्वित्थमेतान्यष्टादशैव समिधः संपद्यन्ते ॥

इध्मप्रव्रश्चनानि

अथेध्मच्छेदनकाले यानि काष्ठशकलानीतस्ततः पतन्ति तानीध्मप्रव्रश्चनानि ॥

शाखा

व्रतोपायनान्ते संनयति यजमानेऽध्वर्युः प्राचीमुदीचीमैशानीं वा दिशं गत्वा पलाशस्य शम्या वा प्राचीमुदीचीमैशानीं वा शाखामिषेत्वादिना समन्त्रं छित्त्वा समन्त्रमेव तां विहारमानयति सा शाखा । तस्य अग्रभागस्थिन्नैस्त्रिभिर्दर्भैर्वलयाकारेण निबद्धः शाखापवित्रमित्युच्यते । यस्तु तस्या मूलभागश्छिन्नपर्णः प्रादेशमात्रः स उपवेशः प्रागुक्तः ॥

विषाणम्

दीक्षितस्य व्रतस्थस्य कण्डूयनापेक्षायां कण्डूतिसाधनं शृङ्गनिर्म्मितं विषाणं नाम ॥

औदुम्बरी नाभिदघ्नपादा अरत्निमात्रशीर्ष्णी आनूच्या मौञ्जविवयना आसन्दी भवति । यज्ञियस्य वृक्षस्योदुम्बरस्याभावे । मुञ्जाभावे तु दार्भं विवानम् । प्रादेशमात्राः पादाः । अरत्निमात्राणीतराण्यङ्गानि शिरः, अनूची, तिरश्ची, पूर्वपादौ, अपरपादौ । विवाने प्राञ्च आतानाः, तिर्य्यञ्च आतानाः, आस्तरणम्, उपबर्हणम्, अतीरीकाः सन्धयः, आस्मा, प्रतिष्ठा, अधस्ताद् द्वौ कूर्चौ इत्येतावन्त्यासन्द्यागात्राणि । औदुम्बरोऽस्या वाय्यो रोहितेनानडुहेनोत्तरलोम्ना चर्म्मणा पिहितः स्यात् । तस्य दशसु पश्चाच्छिद्रेषु दश दश तन्त्र्यो बद्धाः स्युः । ताश्च स्नायुमय्यो नाड्यो लोके प्रतिपन्नाः । इह तु ता मौञ्ज्यो दार्भ्यो वा स्युरिति लाट्यायनः । शाण्डिल्यस्तु त्रिष्वेव पश्चाच्छिद्रेषु सत्सु चतुस्त्रिंशन्मध्यमे तन्त्र्यः स्युरभितस्तु त्रयस्त्रिंशतौ इति मन्यते

उभयथापि शततन्त्रीको वाणः स्यादिति दिक् तत्र वास आसीर्ग्य कर्म्मविशेषे यजमान उपविशति क्वचित् सोमोराजाऽन्यो वा । यथोक्तं लाट्यायनीये—"आरोहन्त्युद्गातार कूर्चानाराहेयुः प्रष्टौ, ब्रह्मा, गृहपति"रिति । प्रष्टौ पार्श्ववर्त्तिनौ प्रस्तोतृप्रतिहर्त्तारौ । या तु प्रवर्ग्यकर्म्मणि चर्म्मानधानार्थमासन्दी भवति सा सम्राडासन्दीत्युच्यते ॥

## इत्युपयोजनपात्राणि ।

## अथ प्रातिस्विकानि ।

सिकता, ऊषरमृत्तिका, मूषकबिलमृत्तिका, वल्मीकमृत्तिका, महाह्रदमृत्तिका, अरण्यवराहविहतमृत्तिका, शर्करा, षट् हिरण्यशकलानि, त्रीणि सुवर्णशकलानि, त्रीणि रजतशकलानि, अश्वत्थस्पार्द्रौः सपत्राः सप्तरोहाः, प्रादेशामात्रा अशुष्का-ग्रास्तिस्रः समिधः, अश्वत्थः, उदुम्बरः, पलाशः, शमी, विकङ्कतः, अशनिहतम्, अरण्यौ, मुञ्जकुलायः, पद्मिनीपत्रम् । इत्याधाने त्रिंशतिसंभाराः ॥

आङ्कुरभ्युत्तणम्, हिरण्यम्, उषाः, आखुकरीषम्, शर्कराः । इत्याधाने पञ्चसंभाराः ।

वल्मीकवपा, वराहविहतम्, आदाराः, पूतीकाः, अजाचीरम् । इति यज्ञशिरसि पञ्चसंभाराः ।

महावीरः, शफः, प्रचरणी, उपयमनम्, उपयमनी, परीशासो, पिन्वने, रौहिणकपाले, रौहिणहवन्यौ स्रुचौ । इत्येतानि दश यज्ञशिरःपात्राणि । तत्र मृत्पिण्डेन प्रादेशमात्रं मध्ये संगृहीतं महावीरं करोति । तस्योपरिष्टात् त्र्यङ्गुलं मुखं तत्र नासिका च क्रियते । तदे-तन्महावीरधारणार्थं यज्ञकाष्ठनिर्म्मिते मध्यतो वर्त्तुले द्वे पात्रे शफपदवाच्ये भवतः । वैकङ्कतं जुहूसदृशं पात्रं प्रचरणी नाम । महापुष्करं महादण्डम् । जुहूसदृशं पात्र-मुपयमनं । अथोपयमन्यादीन्युपरिष्टात् प्रकरणान्तरे प्रदर्शयिष्यामः । एवमन्यान्या-न्यपि तत्तत्कर्मणां प्रातिस्विकानि पात्राणि तत्तत्कर्म्मप्रकरणे प्रदर्शयिष्यन्ते इति दिक् ।

## अथासनानि ।

आसनं ब्रह्मणः कार्यं वारणं वा विकङ्कतम् ।
हस्तमात्रं चतुःस्रक्तिमूलदण्डसमन्वितम् ।
द्विषडङ्गुलसंख्याको मूलदण्डो विकङ्कतः ।

एवं यजमानासनम्, पत्न्यासनम्, अध्वर्य्यासनम्, होत्रासनम् आग्नीध्रासनम्; इत्यादीन्यासनानि सर्वाण्यरत्निमात्राणि कार्य्याणि ॥ इति ॥

## इति यज्ञपात्राधिकारः ।

# अथ हविर्द्रव्याधिकारः ।

देवतोद्देशेन त्यागार्थमुपकल्पितानि यज्ञसाधनानि द्रव्याणि हवींष्युच्यन्ते । तेषां चत्वारो वर्गा भवन्ति—पशुप्रभवाणि, औषधानि, याहच्छिकानि, उत्तरद्रव्याणि—इति भेदात् । तत्र पशुप्रभवं दशविधम्—पयः, दधि, आज्यम्, आमिक्षा, वाजिनम्, वपा, त्वचः, मांसम्, लोहितम्, वसा चेति । पयो दुग्धम् । दधि प्रसिद्धम् । आज्यं घृतम् । प्रतप्ते दुग्धे दधिमिश्रणाद् द्वैरूप्यं जायते; तत्र यो घनीभूतो भागः सामिक्षा । यस्तु तत्र जलरूपो भागस्तद्वाजिनम् । वपा हृदयस्थो मेदोविशेषः । त्वचश्चर्म्माणि । अश्वमेधे "त्वच उत्कृत्य वपाना"मिति वचनात् त्वचोऽप्युपयोगो दृश्यते । मांसं पललम् । लोहितं रुधिरम् । "अश्वस्य लोहितं स्विष्टकृदर्थ"मिति वचनात् । वसा पशुरसः । इत्येतानि दश द्रव्याणि पशुदेहात् प्रभवन्ति ॥ १ ॥

अथौषधं द्वादशविधम्—ओषधयः, तन्दुलानि, पिष्टानि, फलीकरणानि, पुरोडाशः, ओदनः, यवागूः, पृथुकाः, लाजाः, धानाः, सक्तवः, सुरा चेति । ओषध्यः फलपाकान्तानि मूलद्रव्याणि । तन्दुलं वितुषीकृतं धान्यम् । पिष्टं तन्दुलादीनां चूर्णं जलमिश्रितं घृष्टं वा । व्रीह्यादीनामुलूखलेऽवहतानां शूर्पेण परापवनात् कण्डनपृथग्भूतानां तुषाणां विशोधनेन संपादनं फलीकरणम् । व्रीह्यादिपिष्टैः श्रुतैर्मन्त्रादियोगाद्विधिवत्संपादितं कपालोपहितं द्रव्यं पुरोडाशः । ओदनो भक्तम् । यवागूः पिष्टमयम् पिष्टद्रव्यम् । पृथुकाश्चिपिटान्नम् । लाजा भर्जितं धान्यम् । धाना भ्रष्टयवाः । यवगोधूमोपवाकानां नकलबदरकर्कन्धूनां पिष्टानि सक्तवः । सुराः पैष्टी-माध्वी-गौड्यादीनि मादकद्रव्याणि । सौत्रामण्यां सुरायागः ॥ २ ॥

अथ याहच्छिकमपि द्वादशविधम्—आकाशः, वायुः, आपः, मधु, सोमः, कृष्णलानि, किंशुकानि, समिधः, शाकलानि, बर्हिः, करीराणि, खर्जूराणि चेति ॥ तत्राकाशो मनाग्रहे । वायुर्वातनामहोमे । आपः संसृष्टहविषि । मधु 'मधुना जुहोती'त्यत्र । सोमो सहायज्ञे । कृष्णलानि अतियज्ञे । किंशुकानि सर्पदल्याम् । करीराणि खर्जूराणि कारीर्याम् । तान्येतानि स्वाहाकारवषट्कारप्रदानानि हवींषि भवन्ति ॥ ३ ॥

अथाग्निः शरीरम्, प्राणः, शरीरी, तुषा इत्येतान्यपि यज्ञसाधनानि भवन्ति । तेषां हविष्ट्वं देवतार्थत्वादिष्यते । देवतायै त्याज्येषु हि हविःशब्दमिच्छन्ति । परे तु पयः प्रभृतिषु खर्जूरान्तेष्वेव चतुस्त्रिंशद्द्रव्येषु हविः शब्दं प्रयुञ्जते ॥

## उत्तरद्रव्याणि ।

अथाहुतिद्रव्यं, होमद्रव्यं, यागद्रव्यं, अर्हणाद्रव्यं, दक्षिणाद्रव्यमित्येतानि

ऽयाख्यास्यामः । आहुतिर्द्वेधैव—सोमाहुतिराज्याहुतिश्चेति । तत्र सोमाहुतिः सोमयज्ञे । अन्यत्र तु हविर्यज्ञे पशुयज्ञे वा सर्वत्राऽऽज्याहुतिर्भवति ॥

होमद्रव्याणि

अथ होमद्रव्याणि तिलादीनि पाकयज्ञे कर्म्मविशेषाद्बहुधा भिद्यन्ते । अग्निहोत्रे तु—
"पयो दधि घृतं तैलं यवागूस्तन्दुलौदनाः । मांसं सोमरसो माषाः होमद्रव्याणि वै दश ।"

तत्र पयसा तन्दुलैर्यवाग्वा वा संप्रति होमः संप्रदायसिद्धः । जनकसंवादश्रुतौ तु—"पय एवाग्निहोत्रं, तदभावे व्रीहियवौ, तदभावे या अन्या ओषधयः, तदभावे या आरण्या ओषधयः, तदभावे वानस्पत्यम्, तदभावे त्वापः स्युः । सर्वाभावे तु सत्यं श्रद्धायां जुहुया"दिति श्रूयते ॥

यागद्रव्याणि

अथ यागद्रव्याणि त्रयोदशधा—आज्यम्, पृषदाज्यम्, तानूनप्त्राज्यम्, आमिक्षा, वाजिनम्, चरुः, पुरोडाशः, पशुपुरोडाशः, वपा, अपूपः, सक्तवः, सुरा, सोमश्चेति । तत्राज्यं स्नेहद्रव्यम् ; तच्चेह घृतं ग्राह्यम् । तदपि गोरेव । तदाज्यस्थाल्यां कृत्वा वेद्यां निधीयते । तदाज्यसंस्कारार्थमग्नेः प्राङ्नीत्वा पुनः पश्चादानीय तत्रैव वेद्यां स्थापयति । यत्र यत्राज्यस्य हवनादिप्रयोगस्तत्र तदाज्यस्थाल्याः सकाशादाज्यं स्रुवेणोद्धृत्य जुह्वादिषु पूरयति । तद्यथा—आज्यस्थाल्या उत्तरतो वेद्यां प्रागग्रमुदगग्रं वा वेदं निधाय तस्मिन् प्रागग्रामादौ जुहूं स्थापयित्वा तस्यां चतुःकृत्वः स्रुवेणाज्यं पूरयति । तत उपभृतं स्थापयित्वा तस्यामाज्यमष्टकृत्वो गृह्णाति । ततो ध्रुवायां चतुःकृत्वो गृह्णाति । आज्यपूर्णाश्च ता जुहूपभृतीः स्रुचोऽध्वर्य्युर्दत्ताः परिकर्मी नीत्वा प्रणीतोत्तरतः स्थापितयोरिध्मबर्हिषोः पश्चिमतः स्थापयति । अथ कर्मविशेषेऽध्वर्य्युर्यागावशिष्टमाज्यं चतुःकृत्वो होतुः पाणौ, षट्कृत्वस्तु आग्नीध्रपाणौ स्रुवेण ददाति । तच्च तौ प्राश्नीतः । सेयमाज्येडा नाम इत्याज्यम् ॥

दधियुक्तं संस्कृतमाज्यं पृषदाज्यं नाम ॥

तानूनप्त्रमपि संस्कृताज्यविशेषः । वेद्यां कंसं निधाय ध्रुवाज्यात् पञ्चकृत्वस्तानूनप्त्रमन्त्रैराज्यं गृह्णाति । अवमृश्यावघ्राय तत्पात्रमद्भिः संस्पृश्य शालाया उत्तरभागे निनयति । तदाज्यं तानूनप्त्रं नाम ॥

अथ पूर्वेद्युरामिक्षादध्यर्थं सायं दोहः कार्य्यः । ततो दधि संपादयेत् । अथ प्रातर्दुग्धे पयस्यग्नितप्ते दधि संमिश्रयति । तेन तत्र दधि मिश्रितोत्तप्तपयोद्रव्ये द्वौ भागौ संपद्येते—यो घनीभूतो भागः सा आमिक्षा इत्युच्यते । यस्तु जलरूपो भागः स वाजिन इत्युच्यते । आमिक्षावाजिने शीतले कृत्वा निदधाति ॥

अथ गार्हपत्याङ्गारान् गार्हपत्यायतनाद्बहिः पश्चिमतो निरूह्य तत्र तैः कृतान्तर्गर्भां चुल्लीं स्थापयित्वा तस्यां सोदकस्थालीमधिश्रित्य तत्र मन्त्रसंस्कृतानि तन्दुलानि परिपच्यन्ते चरवो नाम । पयःसहितां तु स्थालीमधिश्रित्य साधितश्चरुः पयसि चरुर्नाम ॥

अथ पुरोडाशः । देवतोद्देशेन कृतो व्रीहियवान्यतरपिष्टपिण्डो सदन्तोजलेन सिद्धः कूर्माकारेण सन्निवेशितः पुरोडाश इत्युच्यते । तत्परिपाकार्थं कपालोपधानं क्रियते । तानि च पुरोडाशभर्जनार्थानि कपालानि मृण्मयानि द्विजहस्तघट्टितानि लौकिकाग्निपरिपक्वानि द्व्यङ्गुलोच्छ्रितानि कार्य्याणि । तत्र कस्मिंश्चित्पुरोडाशे एकमेवकपालं विधीयते । तच्चैकमेवाश्वशफाकारमश्वशफपरिमाणं च भवति । यत्र त्वनेककपालः पुरोडाशस्तत्रेदमश्वशफाकारत्वमश्वशफमात्रत्वं चास्मिन् कपालसमूहे नेयम् । यथाष्टाकपाले पुरोडाशे मध्ये तावदेकं चतुरस्रं कपालमुपधीयते । ततस्तत्पश्चाद्—द्वितीयं शफाकारतासंपादनार्थमर्धचन्द्राकारं कार्य्यम् । एवं मध्यमस्य पुरस्तादप्यर्धचन्द्राकारं तृतीयम् । तादृशमेव च मध्यमस्य दक्षिणतश्चतुर्थम् । अथ दक्षिणस्थास्य चतुर्थस्य पुरस्तात् पञ्चमम्, पश्चात् षष्ठं च शफाकृतियोग्यं कार्य्यम् । एवं पश्चिमस्थस्य द्वितीयस्योत्तरतः सप्तमम् । पूर्वस्थस्य तृतीयस्योत्तरतस्त्वष्टमं संनिवेश्यम् । इत्थमेतान्यष्टौ कपालानि समुदितान्याकारेण परिमाणेन चाश्वशफसादृश्येन संपद्यन्ते ।

एवं न्यूनाधिककपालेष्वपि चतुःकपालषट्कपालसप्तकपालैकादशकपालद्वादशकपालादिषु कपालरचनाक्रमः कपालविभागश्च शफाकारतन्मात्रासंपत्तिसंभवानुसारेणाऽनुसन्धेयो । तत्र च तं पुरोडाशं सर्वकपालेषु संश्लेषयितुमश्वशफमात्रं प्रसारयति । शतपथे तु—"तं प्रथयति । तं न सत्रा पृथुं कुर्य्यात् । अश्वशफमात्रं कुर्य्यादित्युहैके आहुः । कस्तद्वेद—यावानश्वशफः । यावन्तमेव स्वयं मनसा न सत्र पृथुं मन्येत, एवं कुर्य्यात्" इत्याम्नायते । केचित्तु द्व्यङ्गुलसमचतुरस्राणि कपालानि इत्याहुः । तद्यथा—

एषु च कपालेषु पक्वान् पुरोडाशान् कपालेभ्य उद्वास्य दारुपात्र्यां प्रथयति इडापात्रतुल्यं केनचिद्विशेषचिह्नेनोपलक्षितं पात्रं दारुपात्री । तत्राज्यापस्तरणं कृत्वा कृतोपस्तरणस्थाने तान् पुरोडाशान् प्रथयति । तां च दारुपात्रीं हविरासादकाले वेद्यामासादयति । ततो यागकाले तत्पात्रस्थानामेव पुरोडाशानामवदानम् ॥

आज्यस्य पुरोडाशस्यान्यस्य वा स्थापितस्य हविषो होमपरिमितभागग्रहणार्थं खण्डनमवदानम् । तच्चानेकवारं कृत्वा गृह्णाति । तथाहि—ध्रुवायाः स्रुवेण जुह्वा-

मेकवारमाज्यं गृहीत्वा पुरोऽनुवाक्यापठनार्थं होतारं संप्रेष्य पुनस्त्रिवारं गृह्णाति। तच्चतुरवत्तं नाम। केषांचित् तत्पञ्चावत्तं भवति। तदुक्तम्—

"जामदग्न्या वत्सविदार्ष्टिषेणास्तथैव च।
भार्गवाश्च्यावना ओर्वाः पञ्चावत्तिन ईरिताः॥"

एषां हि यजमानत्वे पञ्चवारमवद्यति। इतोऽन्ये चतुरवत्तिनः॥ इत्याज्यावदानम्॥

अथ पुरोडाशस्यावदानम्। तत्रादौ जुह्वामुपस्तीर्य्य प्रथमस्य पुरोडाशस्य पूर्वार्धात् प्रथममवदाय द्वितीयं पश्चार्धादवद्यति। ततोऽभिघारयति। तथा चोपस्तरण— पूर्वार्धक—पश्चार्धिकाभिघारणैश्चतुरवत्तं भवति। द्वितीयपुरोडाशादीनां तु अन्ततः प्राक्संस्थतासंपादनाय पूर्वं पश्चार्धादवदानं ततः पूर्वार्धादिति विशेषः। हविरवदानं च पञ्चभिरङ्गुलिभिरङ्गुष्ठमध्यमानामिकाभिर्वा कार्य्यम्। पञ्चावत्तिनां तु प्रथमस्य मध्यात् पूर्वार्धात् पश्चार्धाच्चेति त्रिरवदानम्। उपस्तरणाभिघारणाभ्यां पञ्चावत्तता। द्वितीयपुरोडाशादीनामप्येवम्॥

एवमेव चर्वादिद्रव्यस्याप्यवदानं कार्य्यम्। तत्र च मेक्षणेनैवावदानं नाङ्गुलिभिरिति विशेषः॥

अथ हवनोत्तरमवशिष्टस्यास्य दारुपात्रीस्थस्य पुरोडाशद्रव्यस्य त्रेधा विभागक्लृप्तिः। प्राशित्रम्, यजमानभाग, इडा च। तथाहि—प्रथमतः प्राशित्रहरणपात्रे प्रथमप्रधानद्रव्यसंबन्धिनं कंचिदंशमवदाय स्रुवदण्डेन तदभिघार्य्य ब्रह्मणः प्राशनार्थं प्रणीतानां पश्चिमतः सादयति तत् प्राशित्रं नाम। तत इडापात्रं वेद्यामुदगग्रं निधाय तस्मिन् यावन्ति प्रधानद्रव्याणि तावदर्थं सकृदेवोदक्संस्थमाज्यस्थाल्याज्येनोपस्तीर्य्य, प्रथम प्रधानद्रव्यस्यादौ दक्षिणार्धादवदाय तस्मिन्निडापात्रे उपस्तीर्णदेशे निदधाति। तत उत्तरार्धादवदाय तत्र निदधाति। ततोऽस्य द्रव्यस्य पूर्वभागात् त्र्यङ्गुलं चतुरङ्गुलं खण्डमवदाय आज्यस्थाल्याज्येन सुसंतृप्तं संतर्प्य यजमानप्राशनार्थं ध्रुवायाः पूर्वभाग निदधाति। तत्खण्डं यजमानभागो नाम। अथ द्वितीयादिप्रधानद्रव्याणां प्रथमवदवदाय निधायोपस्तरणवदभिघारयति। तदिडावदानमुच्यते। इत्थमिडापात्र्यां गृहीतं हविरिडा नाम। तां ततो होतृपूर्वा ऋत्विजः सयजमाना भक्षयन्ति, तदिडाप्राशनं भवति। इति पुरोडाशः॥

अथ पशुपुरोडाशादीनि पञ्च पाशुकहविर्द्रव्याणि। तत्र शामित्राग्नौ पशुकुम्भीमधिश्रित्य तस्यां प्रभूतमुदकं कृत्वा वपाभिन्नानि सर्वाणि पशोरङ्गानि तत्र निक्षिप्य सुशृतानि करोति। तान्येव पशुपुरोडाशः। तमन्तर्वेदि सादयति। जुहूपभृतावुपस्तीर्य पुरोडाशस्य पूर्वार्धादवद्यति। पाशुकहविषोऽस्य हृदयादीन्येकादशावदानानि भवन्ति।

हृदयाज्जुह्वां द्विरवद्यति । जिह्वाया द्विरवद्यति । ततो वक्षसस्तनिम्नश्च । दक्षिणवृक्कात्, सव्यवृक्कात्, सव्याद्दोष्णः, दक्षिणपार्श्वात्, सव्य पार्श्वात्, दक्षिणश्रोण्याः, अध्यध्या ऊर्ध्वप्रदेशात् । गुदं त्रेधाकृत्वा सूक्ष्ममुपयड्भ्योऽग्रं स्विष्टकृते निधाय, मध्यं द्वेधा कृत्वा जुह्वामवदधाति । सर्वाण्यङ्गानि द्विर्द्विरवद्यति ॥ हवनोत्तरकालं षड्ऋत्विजो यजमान-श्चैष्टिकेडावदिमां पशिवडामपि भक्षयन्ति ॥

अस्यैव तु पशोः सर्वोदरव्यापी पोलिकाकारोऽतिश्वेतवर्णो मेदोविशेषो वपा नाम । वपायां शृतायां पात्रान्तरेऽपूर्वाज्येनापस्तीर्य वपाश्रपणीसकाशादुद्धृत्य वपां तस्मिन् पात्रेऽवधायाऽऽज्येनाभिघार्य अपूर्वाज्येनाभिघार्योद्वास्य तेनैवाज्येन सांनाय्यवन्मन्त्रेणालं करोति । तां वपां स्रुचां दक्षिणतः सादयति ॥

अथ त्र्यम्बकयागे त्रैयम्बकापूपः क्रियते । अपूपश्च लोके प्रसिद्धपदार्थः ॥

अथ सक्तवः । यवगोधूमोपवाकानां सक्तवः । नकलबदरककेन्धूनां च सक्तवः । नकलादयो वदरभेदाः । सौत्रामण्यां व्रीहिसक्तून् यवसक्तून् वाऽऽज्येनापूर्वेणोपस्ती-र्याभिघार्याञ्जलिनाऽऽहवनीयाग्नौ जुहोति ॥

अथ सुरा मादकद्रव्यविशेषः । स्मरन्ति हि धर्मसूत्रकाराः ॥

"सुरा वै मलमन्नानां पाप्मा च मलमुच्यते । तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ।" इति ॥

सौत्रामण्यां तु प्रत्यक्षं होता सुराग्रहं भक्षयति । घ्राणभक्षं वा । यदि होता न भक्षयति, तदा खरे उपविष्टः कश्चिद् ब्राह्मणो भक्षति । यदि ब्राह्मणं न विन्देत्, तर्हि आहवनीयस्य दक्षिणतो भस्मनिर्म्मितखरस्य वल्मीकवपायामवनयति ॥

अथ सोमः । स च लताविशेषो गन्धमादनहेमकूटादिष्वद्रिषु लभ्यः ॥

अर्हणीयद्रव्याणि

अथार्हणीयद्रव्याणि अर्हणार्थमर्घ्याय विष्टरं पाद्यमर्घ्यमाचमनीयं मधुपर्कं गाञ्चेत्याहरन्ति । विष्टरो दर्भासनम् । उपलक्षणमिदं कूर्चस्य । "कूर्चमध्यास्तेऽधितिष्ठति वे"-तिशांखायनीये । अर्घ्यंसर्वार्थमुदकम् । आचमनीयमाचमनार्थमुदकम् । मधुपर्को मधुना पृक्तं दधिपयः कृतान्नं वा । "दधनि पयस्यकृतान्ने मधु दध्यान्मधुपर्कमेतदाहुः ।" षडर्घ्या भवन्ति—आचार्य्य ऋत्विक् श्वशुरो राजा स्नातको जामाता च । एषामाचार्यादीनां त्रैवर्णिकानां परिसंवत्सराद्गृहमागतानामवश्यं मधुपर्कः कर्त्तव्य इत्यार्यसदाचारः । तत्र स्नातकः समावृत्तमात्रो ग्राह्यः ॥ मधुपर्कानन्तरं गौरप्येको निवेद्यः । अथ—मन्थानामपि मधुपर्क कल्पत्वमाहुः । सक्तव एव दधिमधुजलयोगात् त्रिविधा मन्था उच्यन्ते—दधिमन्थो, मधुमन्थ, उदमन्थश्चेति ॥

अथ दक्षिणाद्रव्याणि

"हतो यज्ञस्त्वदक्षिण" इति श्रुतेऋत्विग्भ्यः कृतकृत्येभ्यो गौर्हिरण्यं भूमिरन्नं वासोऽन्यद्वा प्रतिपन्नं वस्तु दक्षिणात्वेन दीयते। एतच्च कर्म्मभेदेन भिद्यते इत्यग्रे वक्ष्यते।

अथ पूर्णपात्रं दक्षिणा ब्रह्मणे दीयते। कृतेनाऽकृतेन वान्नेन फलैर्वा कंसं चमसं वा पात्रमापूर्य्य दद्यात् तत्पूर्णपात्रम्।

"अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम्।
पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते"।
इति गृह्यासंग्रहः।
"यावता वहुभोक्तुश्च तृप्तिः पूर्णेन जायते।
नावराद्धर्य्यं ततः कुर्य्यात् पूर्णपात्रमिति स्थितिः"
इति कर्म्मप्रदीपः॥

अथैतदतिरिक्तमेतेभ्यः कर्म्मान्ते भोजनीयं दीयते तदन्वाहार्यं नाम दक्षिणाद्रव्यम्। यावन्तस्तत्र कर्म्मणि ऋत्विजः संयुक्ताः स्युस्तावतां भोजने पर्याप्त ओदनो दक्षिणाग्नौ सुश्रृतः क्रियते, ततो वेद्या दक्षिणश्रोण्यां स्थाप्यते। ततः स्वं स्वं भक्तं गृहीत्वा ब्रह्मादयः प्राश्नन्ति। आदिष्टदक्षिणास्वाग्रयणमित्रविन्दाप्रभृतिष्वन्वाहार्य्यो नास्ति। नियता ह्येषा दक्षिणा यत्राग्नौ पच्यते, सोऽत एव दक्षिणाग्निरुच्यतेऽन्वाहार्य्यपचनश्चेति॥

द्विविधा हि देवता भवन्ति—ईडेन्याः, सपर्य्येण्याश्च। ये दिव्या देवा अग्निसोमेन्द्रवरुणादयस्ते ईडेन्याः। तेभ्यो यागहोमाहुतिद्रव्याणि हवींषि भवन्ति। ये तु ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवाः सपर्य्येण्याः। तेषां दक्षिणाद्रव्याणि हवींषि। श्रूयते च—"परोक्षं वा अन्ये देवा इज्यन्ते प्रत्यक्षमन्ये। यद्यजते—य एव देवाः परोक्षमिज्यन्ते तानेव तद् यजति। यदन्वाहार्य्यमाहरन्ति—एते वै देवाः प्रत्यक्षं यद् ब्राह्मणास्तानेव तेन प्रीणाति।" इति दिक्।

**इति श्रीमहामहोपदेशक समीक्षाचक्रवर्त्ति-**
**श्रीमधुसूदन-विद्यावाचस्पतिप्रणीते**
**यज्ञमधुसूदनाभिधे यज्ञशास्त्रे**
**यज्ञोपकरणाध्यायो द्वितीयः**
**सम्पूर्णः।**

# अथ यज्ञविटपाध्यायः

यज्ञेश्वरप्रसादाय श्रीयज्ञमधुसूदने ॥
यज्ञप्रचयमुत्कृष्टं प्रवक्ष्मि मधुसूदनः ॥ १ ॥

यज्ञाः कतिविधा भवन्तीति जिज्ञासायां कश्चित् तावदाह--पञ्चविधा हीमे सर्वे यज्ञा भवन्ति ।

अग्निहोत्रम्[१], दर्शपौर्णमासम्[२], चातुर्मास्यम्[३], पशुबन्धः[४], सोम[५] इति भेदात् । एतेषामेव यज्ञभेदानां स्वरूपारम्भकत्वेनोपबृंहणत्वेन विकृतित्वेन समुच्चयेन चान्येषां सर्वेषामेव यज्ञानां विधानात्तेषामप्येतैरेवोपसंग्रहणात् । अत एव "पाङ्क्तो वै यज्ञ"--इति श्रूयते । पाङ्क्तः पञ्चविधः ॥ १ ॥

अपर आह । एक एव हि सर्वो यज्ञोऽग्निहोत्रादिभिः पञ्चसंस्थो विधीयते । एकस्यैव संवत्सराग्नेः संस्काररूपत्वेन सर्वेषामेषां यज्ञानां स्वरूपारम्भात् तस्य चाहोरात्रादिभिः पञ्चभिरेव संस्थाभिः पृथक् संस्करणादग्निहोत्रादिसंस्थाभिः पृथगाख्यानेऽपि वस्तुतोऽनन्यत्वात् । पाङ्क्तो यज्ञ इति हि श्रुतिः पञ्चसंस्थमेवैतमाहेति बोध्यम् ॥ २ ॥

अपर आह यज्ञस्त्रिविधः—इष्टयः[१], पशवः[२], सोमा[३] इति भेदात् । यत्राज्याहुतौ पशुहिंसा नास्ति तत्रेष्टिशब्दः । यत्र मांसमपि देवतायै दीयते तत्र पशुशब्दः । यत्र ग्रहयागे सोमरसाहुतिस्तत्र सोमशब्द इति ॥ ३ ॥

एके तावदाहुः—एकविंशतिसंस्थः सर्वो यज्ञः—सप्तपाकयज्ञसंस्थाः, सप्तहविर्यज्ञसंस्थाः, सप्तसोमसंस्था इति भेदात् । तथा हि—औपासनहोमो[१], वैश्वदेवम्[२], पार्वणम्[३], अष्टकाः[४], मासिकश्राद्धम्[५], सर्पबलिः[६], ईशानबलिरिति[७] सप्तपाकयज्ञसंस्थाः ॥ १ ॥ अग्निहोत्रम्[१] दर्शपूर्णमासौ[२], आग्रयणादीष्टयनानि[३] चातुर्मास्यानि[४], निरूढपशुबन्धः[५], सौत्रामणी[६], पिण्डपितृयज्ञचतुर्होतृहोमादयो दर्विहोमाः[७]—इति सप्त हविर्यज्ञसंस्थाः ॥ यज्ञशब्दवाच्यत्वे पिण्डपितृयज्ञस्य वषट्प्रदानत्वाभावाद् दर्विहोमता ॥ २ ॥ अग्निष्टोमः[१],

२ ३ ४ ५ ६ ७
अत्यग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रः, वाजपेयः, आप्तोर्यामः—इति सप्त सोमसंस्थाः ॥ अग्निष्टोमे षोडशीग्रहणादत्यग्निष्टोमो राजन्यस्येत्येके, ब्राह्मणस्यापीत्येके ॥ एताश्चैकविंशतिर्यज्ञसंस्थाः प्रचारबाहुल्याभिप्रायेण नित्यत्वाभिप्रायेणावश्यकर्तव्यताभिप्रायेण चोपन्यस्ताः । तथाहि—"जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाँ जायते—ब्रह्मचर्येण ऋषिभ्यो, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः ॥ एष वा अनृणी, यः पुत्री यज्वा ब्रह्मचारी च" । इति श्रुतेः प्राणिमात्रे नाप्राप्तस्य देवर्णस्यापनयनार्थं हीमे एकविंशतिसंस्था यज्ञा विधीयन्ते । तस्मादशूद्राणां सर्वेषामेवैतेऽवश्यकर्तव्या इष्यन्ते । शूद्राणां तु विद्या नास्तीत्यशक्तत्वादधिकारो निरस्यते इत्यन्यत् । त्रैवर्णिकेन तु समर्थेनाफलार्थिनाऽप्येते कर्तव्या इति नित्यत्वम् । अतएव चैषां पुरात्रेऽधिकप्रचार आसीदिति बोध्यम् ।

श्रूयते चैकविंशतित्वमित्थं यज्ञानां गोपथश्रुतौ "सप्तसुत्याः, सप्त च पाकयज्ञा, हविर्यज्ञाः सप्त, तथैकविंशतिः । सर्वे ते यज्ञा अङ्गिरसोऽपियन्ति नूतना यानृषयः सृजन्ति ये च सृष्टाः पुराणैः"—इति ॥ (५।२५) ॥ "सायं प्रातर्नित्यहोमौ स्थालीपाको नवश्च यः । बलिश्च पितृयज्ञश्च अष्टका सप्तमः पशुः" इत्येते पाकयज्ञाः ॥—"अग्न्याधेयमग्निहोत्रं पौर्णमास्यमावास्ये । नवेष्टिश्चातुर्मास्यानि पशुबन्धोऽत्र सप्तमः"—इत्येते हविर्यज्ञाः । "अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशिमांस्ततः । वाजपेयोऽतिरात्रश्च आप्तोर्यामोऽत्र सप्तमः"—इत्येते सुत्याः ॥ ( गो० ब्रा० ५ प्र० २३ ) इति ॥ इत्थं चैकविंशतेः संग्रहेण त्रयो यज्ञाः प्रसिध्यन्ति पाकयज्ञो हविर्यज्ञः सोमयज्ञ इति ॥ पूर्वं त्रेतायामेव त्रैविध्यस्येष्टत्वात् पाकयज्ञं त्यक्त्वा पशुबन्धेन त्रैविध्यमुक्तम् । इह तु त्रेतोपेक्षणात् पाकयज्ञस्यापि संग्रहेण त्रैविध्यमाख्यातम् । पशुबन्धस्य पशुपुरोडाशतया हविर्यज्ञेऽन्तर्भावयितुं शक्यत्वात् ॥ इति दिक् ॥ ४ ॥

अपरस्तु सर्वानेव यज्ञानन्यथा विभजते । तथाहि यज्ञः पञ्चधा—

१ २ ३ ४ ५
शिरोयज्ञः, अतियज्ञः, महायज्ञः, हविर्यज्ञः, पाकयज्ञश्चेति ।

### शिरोयज्ञः १

यज्ञो वै विष्णुः । सोऽसावादित्यः । तस्य धर्मः प्रवर्ग्यः शिरोभागः । छिन्नशीर्षा हि सर्वो यज्ञः । स शिरोयज्ञेन शीर्षण्वान् भवति । स यदेतेन यज्ञस्य शिरः प्रतिसन्धत्ते तेनासौ शिरोयज्ञो नाम । नात्र प्रणीताः प्रणयन्ति । नात्र प्रयाजानुयाजाः । नाज्यभागावत्र जुहोति मृन्मयैरेवात्र जुहोति न वानस्पत्यैरिति विशेषः

तत्र सहस्त्रे प्रवृञ्ज्यात्, सर्ववेदसे च विश्वजिति च वाजपेये च राजसूये च सत्रे च एतान्येवास्य प्रवर्जनानि। नातोऽन्यत्र। तेनाग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुबन्धः सौम्योऽध्वरश्चेत्येते सर्वेऽप्यप्रवर्ग्याः। सोऽयं धर्मयागः। प्रवर्ग्ययागः। सम्राड्-यागः। महावीरोपासना चेत्येभिः शब्दैर्व्यपदिश्यते॥ इति शिरोयज्ञाधिकारः॥ १॥

### अतियज्ञः ४

अथाग्निचित्या, वाजपेयः, राजसूयः, अश्वमेधः इत्येते चत्वारोऽतियज्ञाः। त इमे परमा यज्ञाः सर्वानन्यानतिक्रामन्ति, नैनानतिक्रामन्ति महायज्ञादयः। अतीनि ह कर्म्माणि सन्ति—यान्यन्यत् कर्म्मातिः तानि। अतीनि तेषामग्निचित्या, राजसूयो, वाजपेयोऽश्वमेधः। तद्यत् तान्यन्यानि कर्म्माण्यति, तस्मात् तान्यतीनि॥ ६-४-३-१ ॥ कां-प्र.-ब्रा.॥ एष्वप्यश्वमेधाद्राजसूयादयोऽतिश्रेष्ठाः। तेष्वपि—"अवरं वै राजसूयं परं वाजपेयम्। राजा वै राजसूयेनेष्ट्वा भवति, सम्राड् वाजपेयेन।" "अवरं हि राज्यं परं साम्राज्यम्" इति वाजपेयश्रुतेः (शत० ५। १। १) राजसूयाद्वाजपेयोऽतिशेते। ततोऽप्यग्निचित्या त्रीनन्यानतिक्रमते। अमृतप्राप्तिहेतुत्वात्। अन्येषु नामृतत्वस्याशास्ति। तत्र गार्हपत्यो नैर्ऋत्य आहवनीयोऽष्टौ धिष्ण्याश्चेत्ये-तेषामेकादशानामग्नीनां सोमसंबन्धिनां संस्कारविशेषोऽग्निचयनं नामा-तियज्ञः। स द्विविधः—स्वतन्त्रः, सोमाङ्गभूतश्च। अन्तरेणाप्यग्निचयनं सोमः क्रियते। इच्छतस्तु स महाव्रते सोमेऽग्निचयनस्यावश्यकत्वात्। तत्राय-मङ्गभूतश्चयनयागः प्रतिपद्यते। अथ यः सोमयागं विनैव क्रियते स स्वतन्त्रः। तत्राध्वरधर्मा अप्यनुक्रमन्तेऽग्निधर्माश्च। फाल्गुन्यां पश्वालम्भोऽनन्तराष्टकायामुखा-संभरणमनन्तरामावास्यायां दीक्षा॥ ततः संवत्सरं यावदुख्याग्निधारण-विष्णुक्रम-वात्सप्रादिकर्माणि। संवत्सरान्ते फाल्गुन्या अनन्तरामावास्यायां सोमक्रयः। सोम-क्रयात् प्रागेव गार्हपत्यचयनं नैर्ऋत्यचयनं सोमक्रयादूर्ध्वं चैत्रशुक्लेऽन्तरोपसदा-वाहवनीयाग्नेः पञ्च चितयः। ततः शतरुद्रियहोमः। अग्निविकर्षणम्। प्रवर्ग्यो-त्सादनमग्निप्रहरणं वैश्वानरमारुताः। वसोर्धारा। आहुतयः। धिष्ण्याग्निचयनम्। इति चयनकर्माणि॥ त एते चत्वारोऽतियज्ञा उक्ताः। एषु चतुर्ष्वतियज्ञेष्वग्नि-चित्यावाजपेययोर्ब्राह्मण एवाधिकुरुते, राजसूयाश्वमेधयोस्तु राजन्य एवेति विशेषः। इत्यतियज्ञाधिकारः॥ २॥

### महायज्ञः १७५

अथ महायज्ञो द्वेधा—सोमः सुरा च। तत्र सोमः पञ्चधा—एकाहः, अहीनः,

रात्रिसत्रम्, अयनसत्रम्, महासत्रं चेति ॥ एकेनाह्ना साध्य एकाहः । द्विरात्रमारभ्य दशरात्रपर्य्यन्ता अनेकाहसाध्या अहीनाः । तत्र दशाहो द्विविधः—छन्दोमदशाहः, त्रिककुब्दशाहश्चेति भेदात् । एकादशरात्रमारभ्य शतरात्रपर्य्यन्तं बहुरात्रसाध्यानि रात्रिसत्राणि । शतरात्रादूर्ध्वं सहस्ररात्रिपर्य्यन्तमयनसत्राणि । तदित्थम्—एक-दशशतसहस्रभेदाच्चतुर्धा भिन्नाः सोमा भवन्तीत्येकं मतम् । ( १ । १० । १०० । १००० ) । द्विरात्रमारभ्य द्वादशरात्रपर्य्यन्तमहीनाः । एकादशरात्रमारभ्य संवत्सरा-दर्वाक् रात्रिसत्राणि । एकसंवत्सरसाध्यमारभ्य सहस्रसंवत्सरपर्य्यन्तमयनस-त्राणि । तथा चायमेकादशाहो द्वादशाहश्चेत्युभयो द्वेधा संपद्यते ह्यहीनभूतः, सत्रभूतश्चेति । तत्रापि द्वादशाहो द्विविधः—व्यूढद्वादशाहो भरतद्वादशाहश्चेति भेदात् । तदित्थम्—एकाहद्वादशाहैकसंवत्सरसहस्रसंवत्सरपरिच्छेदाच्चतुर्धा भिन्नाः सोमा भवन्तीत्यपरं मतम् ( १ । १२ । ३६० । ३६०००० ) ॥ महासत्राणि तु यावज्जन्मसाध्यानि । तत्र सोमानियमेऽपि चिररात्रसाध्यत्वात् सत्रशब्दः प्रवर्तते । अथादौ सोमाधेयमन्ते च काम्यसोमान् प्रवेशयन्तः केचिदिष्टिवत् सोमेऽपि साप्त-विध्यमिच्छन्ति ॥

### एकाहाः ४८

तत्रैकाहा बहुविधा इष्यन्ते । तेषां प्रकृतिभूतः प्रधानैकाहो ज्योतिष्टोमः । स च सप्तसंस्थः प्रतिपद्यते—अग्निष्टोमः[१] । अत्यग्निष्टोमः[२] । उक्थ्यस्तोमः[३] । षोडशिस्तोमः[४] । अतिरात्रस्तोमः[५] । वाजपेयस्तोमः[६] । आप्तोर्यामस्तोमः[७] । इति ॥ एता हि तस्य सप्त संस्थाः ॥ सर्वेऽप्येतेऽग्निष्टोमसंपन्ना भवन्तीत्यतः सप्तसंस्थोऽप्ययमग्निष्टोम इत्यु-च्यते ॥ आग्नेय्यां यज्ञायज्ञियायामृच्युत्पन्नेनाग्निष्टोमसाम्ना समाप्तेरप्ययमग्नि-ष्टोमो नाम । प्रातःसवने बहिःपवमानस्त्रिवृत्स्तोम इति नवस्तोत्रीयाः ९ ॥ आज्यस्तोत्राणि चत्वारि पञ्चदशानीति षष्टिः स्तोत्रीयाः ६० ॥ माध्यन्दिने सवने माध्य-न्दिनः पवमानः पञ्चदशस्तोम इति पञ्चदश स्तोत्रीयाः १५ ॥ पृष्ठस्तोत्राणि चत्वारि सप्तदशानीत्यष्टषष्टिः स्तोत्रीयाः ६८ ॥ तृतीयसवने आर्भवः पवमानः सप्तदश इति सप्त-दश स्तोत्रीयाः १७ ॥ अग्निष्टोमस्तोत्रमेकविंशमित्येकविंशतिः स्तोत्रीयाः २१ ॥ इत्थ-मत्र नवत्यधिकं शतं स्तोत्रीयाः संपद्यन्ते । ताश्चोनविंशतयोदश भवन्ति । दशाक्षरत्वा-च्चायमग्निष्टोमो विराट् । विराड्हि छन्दसां ज्योतिः । तस्मादयमग्निष्टोमो ज्योतिष्टोम इत्युच्यते ॥ त्रिवृत्पञ्चदशसप्तदशैकविंशाख्यैश्चतुर्भिर्ज्योतिषां स्तोमैःसाध्यत्वादप्ययं ज्योतिष्टोम इत्युच्यते चतुष्टोमश्च । अग्निष्टोमः[१], उक्थ्यः[२], षोडशी[३], अतिरात्रः[४]—इत्ये-

तेषां चतुर्णां सर्वेऽपि चतुष्टोमशब्दो व्यवह्रियते। न इमे याज्ञिकानां संप्रदायभेदाद् व्यवहारभेदा भवन्ति॥ वाजपेयस्त्वयमग्निष्टोमसंस्थाविशेषः पूर्वस्मादतियज्ञविशेषा-द्वाजपेयादतिरिच्यते॥

स चायमग्निष्टोमः पञ्चाहसाध्यः। वसन्ते पूर्णिमायां प्रतिपद्यमायां प्रतिपदि वा आरम्भः। प्रथमेऽहनि दीक्षादीक्षणीयायज्ञानुष्ठानम्। द्वितीयेऽहनि प्रायणीययागः। सोमलताक्रयणं च॥ ततो द्वितीये तृतीये चतुर्थे चाह्नि प्रातःसायं च प्रवर्ग्योपस-द्यागः। चतुर्थेऽहनि प्रवर्ग्योद्वासनादूर्ध्वमग्नीषोमीयपश्वनुष्ठानम्। सोमलताकण्डनेन सोमरसं निष्कास्य ग्रहैश्चमसैश्च होमः॥ तत्र सूर्योदयादूर्ध्वमाग्नेयपशुयागः। उक्थ-पर्यायान्ते कृते प्रातःसवनसमाप्तिः। ततो मध्यन्दिनसवनम्। तत्रैव द्वादशोत्तर-शतं गावो दक्षिणा दीयन्ते। ततस्तृतीयसवनम्। इत्थं सवनत्रयात्मकः प्रधानयागः। ततोऽवभृथयाग उदके वरुणदेवताकः पुरोडाशहोमः॥ ततोऽनुबन्ध्या पशुयागः। तत्र गोः पशोः कलिनिषिद्धत्वात् तत्स्थाने आमीक्षायागः। तत उदयनीया चोदवसानीया च पञ्चमेऽहनि यावद्रात्रि कार्य्या॥ इति कार्य्यक्रमः। दीक्षोपसत्सुत्यानां सुत्यायाः प्राधान्यात् तदनुरोधेनास्यैकाहत्वमिष्यते॥

चतुष्टोमे अग्निमारुतादूर्ध्वमागमात् त्रयाणां शस्त्राणामुक्थो भवति। एकागमा-दूर्ध्वमुक्थेभ्यः षोडशी। त्रयोदशागमादूर्ध्वं षोडशिनोऽतिरात्रः॥ अन्तरेणाग्निमारुत-मनुयाजांश्चैतेषां स्थानम्—इत्याह शांखायनः। भाष्यकारस्त्वाह—अग्निष्टोमादूर्ध्व-मुक्थः। ततः षोडशी ततोऽतिरात्रः इतिक्रमो नियमेन नापेक्ष्यते। अत्यग्निष्टोमे आग्नि-मारुतादूर्ध्वं षोडशिग्रहे स्तुते शस्त्रम्। उक्थशस्त्रेऽप्यूर्ध्वं नावश्यं षोडशिचरणम्। अकृत्वापि षोडशिनं त्रयोदशागमादतिरात्रो भवति इति॥

अथ वैकारिका एकाहा आङ्गिरसकल्पे वैतानसूत्रे ताण्ड्यादिषु चोक्ताः। यथा—१ त्रिवृत्स्तोमः, २ पञ्चदशस्तोमः, ३ सप्तदशस्तोमः, ४ एकविंशतिस्तोमः, ५ त्रिणवस्तोमः, ६ त्रयस्त्रिंशस्तोमः, ७ सर्वस्तोमोऽतिरात्रः, ८ चतुर्विंशस्तोमः, ९ विषुवत्स्तोमः, १० अभिजित् स्तोमः, ११ सर्वजितस्तोमः, १२ विश्वजित्स्तोमः, १३ बलभित्, १४ उद्भित्, १५ पुनस्तोमः, १६ सूर्य्यस्तोमः, १७ इन्द्रस्तोमः, १८ मरुत्स्तोमः, १९ भूमिस्तोमः, २० प्रतीचीनस्तोमः, २१ वैश्यस्तोमः, २२ व्रात्यस्तोमः, २३ अग्नेःकुलायः, २४ इन्द्रा-ग्न्योः कुलायः, २५ तीव्रसुत्, २६ गोसवः, २७ बृहस्पतिसवः, २८ वनस्पति सवः, २९ त्विट्, ३० एट्, ३१ विराट्, ३२ स्वराट्, ३३ सम्राट्, ३४ विराजः, ३५ राज-सूयः, ३६ वाजपेयः, ३७ दशपेयः, ३८ चतुःपर्य्यायः, ३९ अपूर्वः, ४० विघनः, ४१ विवधः, ४२ उपहव्यः, ४३ उपसदः, ४४ सदः, ४५ राशिः, ४६ सरापः, ४७ ऋषभः, ४८ अपचितिः, ४९ विनुतिः, ५० अभिभूतिः, ५१ साद्यस्क्रः, ५२ विभ्रंशयज्ञः, ५३

सदंशः, ५४ अभिषेचनीयः, ५५ अजिरवज्रः, ५६ वज्रः, ५७ इषुः, ५८ श्येनः एवमेवान्यत्र विहिता अन्येऽप्येकाहा द्रष्टव्याः ॥ इत्येकाहप्रचयः ॥

अहीनाः ३५

अथाहीना वैतानसूत्रादिषूक्ता यथा व्युष्टिः । आङ्गिरसः । कापिवनः । चैत्ररथः । गो आयुषी । इत्येते पञ्च द्व्यहाः ॥ ० ॥ ५ ॥ चत्वारि सौमिकचातुर्म्मास्यानि वैश्वदेव[1]—वरुणप्रघास[2]—शाकमेध[3]शुनासीर्य्याणि[4] । गर्गत्रिरात्रम्[5] । वैदत्रिरात्रम्[6] । चतुर्विंशच[7]तुश्चत्वारिंशाष्टाचत्वारिंशैरेकाहैश्छन्दोभवत्[8] त्र्यहः । पराकः[9] । अन्तर्वसुः[10] । अश्वमेधः[11] । स्वरसामानस्त्रयः[12] । पृष्ठत्र्यहः[13] । ज्योतिर्गौरायुरित्याभिप्लविकत्र्यहः[14]—इति त्र्यहाः[15] पञ्चदश ॥ ० ॥ १५ ॥ ० ॥ संसर्पः । चतुर्वीरः—इति द्वौ चतुरहौ ॥ ० ॥ २ ॥

अभ्यासङ्ग्यः[1] । पञ्चशारदीयः[2] । ज्योतिर्गौरायुर्गौरायुरित्यभिप्लवपञ्चाहः[3] । पृष्ठ्यपञ्चाहः[4]—इति चत्वारः पञ्चाहाः ॥ ० ॥ ॥ ४ ॥ ज्योतिर्गौरायुर्गौरायुर्ज्योतिरित्यभिप्लवषडहः[1] । त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाः पृष्ठ्यः षडहः[2] ॥ इति द्वौ षडहौ ॥ ० ॥ २ ॥ आभिप्लविकः षडहो महाव्रतान्त्यः सप्ताह एकः ॥ १ ॥ आभिप्लविकः षडह एव गौरायुरिति द्व्यहेन युक्तोऽष्टाह एकः ॥ ० ॥ ॥ १ ॥

अभिजित्[1], स्वरसामानस्त्रयः[3], ( विषुवान्[1], स्वरसामानस्त्रयः[3] ) विश्वजित्[1]—इत्येष एतैर्नवरात्र एकः ॥ ० ॥ १ ॥ पृष्ठ्यषडहः, छन्दोमत्र्यहः । चतुर्विंशात्मकोऽविवाक्यश्चैकाहः—इत्येतैः षडहत्र्यहैकाहैः कृतः पृष्ठ्यच्छन्दोमाविवाक्यात्मकः—छन्दोमदशाहः त्रिककुब्दशाहः ॥ ० ॥ २ ॥

दशाह एव महाव्रतान्त्य एकादशाहः ॥ ० ॥ १ ॥ पृष्ठ्यच्छन्दोमाविवाक्यात्मको दशाह एवाद्यन्ताभ्यामतिरात्राभ्यां संपुटितो भरतद्वादशाहः ॥ पृष्ठ्यच्छन्दोमाविवाक्यमहाव्रतातिरात्रात्मकस्तु व्यूढद्वादशाहः ॥ १ ॥ २ ॥ द्वादशसुत्यः क्रतुर्द्वादशाहः सुत्यानि सावनमानपरिमितान्यहानि । सर्वमेवाहः—त्रिवृत्स्तोमं रथन्तरपृष्ठमग्निष्टोमसंस्थं भवतीति शांखायनः ॥ इत्यहीनसोमाः पञ्चत्रिंशदाख्याताः ॥ ० ॥ ३५ ॥ इत्यहीनप्रचयः ॥

| भरत—द्वादशाहः | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| प्रायणीयोऽतिरात्रः | दशाहः | | | | | | | | | | उदयनीयोऽतिरात्रः |
| | पृष्ठ्यः षडहः | | | | | | छन्दोमाः | | | अविवाक्यम् | |
| | ९ | १५ | १७ | २१ | २७ | ३३ | २४ | ४४ | ४८ | २४ | |
| १ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | १ |

| व्यूढछन्दा द्वादशाहः | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| एकादशाहः | | | | | | | | | | | |
| दशाहः | | | | | | | | | | महाव्रतम् | अतिरात्रः |
| पृष्ठ्यः षडहः | | | | | | छन्दोमाः | | | अविवाक्यम् | | |
| ९ | १५ | १७ | २१ | २७ | ३३ | २४ | ४४ | ४८ | २४ | २५ | |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | १ | |

### अथ रात्रिसत्राणि ३२

द्वादशाहप्रभृतीनि शतरात्रपर्य्यन्तानि रात्रिसत्राणि । तत्र द्वादशाहप्रभृतीनि चत्वारिंशद्रात्रपर्य्यन्तान्येकोत्तराणि सत्राणि ऊनत्रिंशत् । तत उत्तराणि तु कानिचिद्वैशेषिकाणि त्रीणि भवन्ति । तत्रैतेष्वेकोत्तरसत्रेषु नित्यो द्वादशाहः । स यैरहोभिर्यथा यथा विवर्द्धमानस्तत्तदेकोत्तरसत्ररूपाय संपद्यते तान्याख्यायन्ते ।

| एकाहआहरणीयः | × महाव्रतम् । १ |
|---|---|
| द्व्यहः,, (२)<br>२= | { गौः......१<br>{ आयुः ...२ |
| त्र्यहः,, (१) | × ज्यातिः...१ |
| ३= (२) | { गौः.........२<br>{ आयुः...... ३ |
| चतुरहः,, (१) | + ज्योतिः...१ |
| ४= (२) | { गौः.........२<br>{ आयुः...... ३ |
| (१) | × महाव्रतम् ४ |
| पञ्चाहः,, (१) | + ज्योतिः...१ |
| ५= (२) | { गौः.........२<br>{ आयुः...... ३ |
| (२) | { गौः.........४<br>{ आयुः......५ |
| षडहः,, (१) | × ज्योतिः...१ |
| (२) | { गौः.........२<br>{ आयुः...... ३ |
| ६= (२) | { गौः.........४<br>{ आयुः......५ |
| (१) | + ज्योतिः...६ |
| सप्ताहः,, (१) | + ज्योतिः १ |
| (२) | { गौः.........२<br>{ आयुः,......३ |
| (२) | { गौः.........४<br>{ आयुः......५ |
| ७= (१) | + ज्योतिः ६ |
| | + महाव्रतम् |

एतेषां स्थानानि यथा--

एतस्य द्वादशाहस्य दशमादह्न ऊर्ध्वं महाव्रतमाहरन्ति; ततस्त्रयोदशरात्रं संपद्यते । अथवा पृष्ठ्यं छन्दोमाश्चान्तरेण सर्वस्तोममतिरात्रम् । ततस्त्रयोदशरात्रं संपद्यते ॥ १३ ॥ तदित्थमेकाहार्थे दशरात्रादूर्ध्वं महाव्रतमाहरेत् पृष्ठ्यादूर्ध्वं सर्वस्तोमं वातिरात्रम् ॥ १३ ॥ अथ द्व्यहार्थे गो आयुषो वर्द्धयेत् ॥ १४ ॥ त्र्यहार्थे त्रीणि पूर्वाण्याभिप्लविकानि ज्योतिर्गौरायुरिति वर्द्धयेत् ॥ १५ ॥ चतुरहार्थे तान्येव महाव्रतचतुर्थानि ॥ १६ ॥ पञ्चाहार्थे आभिप्लविकान्यादितः पञ्च वर्द्धयेत्—ज्योतिः, गोरायुः, गौरायुरिति ॥ १७ ॥ षडहार्थे आभिप्लविकं षडहं वर्द्धयेत्—॥ १८ ॥ सप्ताहार्थे तु महाव्रतसप्तमं षडहमाभिप्लविकम् ॥ १९ ॥ तदत ऊर्ध्वं मध्यनेनैव न्यायेन तां तां संख्यां पूरयन्ति ॥ एतत् सप्तकस्य चतुरावृत्या द्वादशाहे संनिवेशाच्चत्वारिंशद्रात्राणि संपद्यन्ते ॥ द्वादशाहे चान्तरेण प्रायणीयं पृष्ठ्यं चैतेषां द्व्यहादीनां प्रवर्द्धनकानां स्थानम्भवति ।

अथ विंशतिरात्रमेकविंशतिरात्रं चतुर्विंशतिरात्रं त्रयस्त्रिंशद्रात्रं सप्तविंशद्रात्रमित्येतेषु पञ्चसु केचन विशेषा आख्यायन्ते । ततोऽन्यत्रा- चत्वारिंशद्रात्रात्सर्वेषु एकोत्तरसत्रेषु पूर्वोक्तेन क्लृप्तिन्यायेनैव सा सा संख्या पूर्य्यते । यद्यदल्पसंख्यं तत् तत्पूर्वं कुर्य्यादिति हि स क्लृप्तिन्यायः ॥

द्वादशाहस्य प्रायणीयं दशरात्रं चान्तरेणागन्तूनामष्टानामह्नां संनिवेशाद्विंशतिरात्रसिद्धिः । तथा हि—प्रायणीयः, १ अभिप्लवषडहः, ७ अभिजित्, ८ विश्वजित्, ९ पृष्ठ्यः षडहः, १५ छन्दोमा त्र्यहः, १८ अविवाक्यम्, १९ उदयनीयः—२० इति क्रमो विंशतिरात्रस्य ॥ २० ॥

अथैकविंशतिरात्रः । स द्वेधा पूर्वश्चोत्तरश्च । यणीयः १ अभिप्लवषडहः ७ अतिरात्रः ८ अभिप्लवषडहौ द्वौ, उदयनीयः—इत्येवं पूर्वः ॥ प्रायणीयः १ पृष्ठ्यःषडहः ६ स्वरसामानस्त्रयः ३ विषुवानहः १ स्वरसामानस्त्रयः ३ पृष्ठ्यःषडहो विपरीतः ६ उदयनीयः १ इत्येवमेकविंशतिरात्र उत्तरः ॥

अथ क्लृप्तिन्यायेन कल्पितानामह्नामागन्तूनां द्वादशाहस्य प्रायणीयं दशरात्रं चान्तरेणैव संनिवेशः सर्वत्र । तथा च प्रायणीयः, आगन्तून्यहानि, दशरात्रः,—उदयनीय—इत्येवं क्रमा वक्ष्यमाणानां ज्ञेयाः । आगन्तूनि स्वहानि क्रमेणोदाहरामः ।

त्र्यहः ३ अभिप्लवषडहः ६ महाव्रतं १ चेति द्वाविंशतिरात्रः ॥ २२ ॥ अभिप्लवपञ्चाहः, अभिप्लवषडहः—इति त्रयोविंशतिरात्रः ॥ २३ ॥

प्रायणीयः १ । पृष्ठ्यस्तोमषडहः । त्रयस्त्रिंशमहरनिरुक्तम् १ । त्रयस्त्रिंशमहर्निरुक्तम् १ । त्रिणवस्तोममेकमहः १ । एकविंशम् । पुनरेकविंशम् १ । त्रिणवस्तोममेकमहः १ । त्रयस्त्रिंशं निरुक्तम् १ । त्रयस्त्रिंशमहरनिरुक्तम् । पृष्ठ्यस्तोमषडहो विपरीतस्त्रयस्त्रिंशारम्भणः ६ । त्रिवृदहरनिरुक्तम् १ । ज्योतिष्टोमोऽग्निष्टोमः १ । उदयनीयः १ । इति चतुर्विंशतिरात्रः ॥ २४ ॥

अथ द्वावभिप्लवौ । महाव्रतमिति पञ्चविंशतिरात्रः ॥ २५ ॥ गो आयुषी । द्वावभिप्लवौ—इति षड्विंशतिरात्रः ॥ २६ ॥ त्र्यहः । अभिप्लवौ द्वौ—इति सप्तविंशतिरात्रः ॥ २७ ॥ त्र्यहः । अभिप्लवौ द्वौ । महाव्रतं चेत्यष्टाविंशतिरात्रः ॥ २८ ॥ पञ्चाहः । अभिप्लवौ द्वौ—इत्येकोनत्रिंशद्रात्रः ॥ २९ ॥ त्रयोऽभिप्लवाः—इति त्रिंशद्रात्रः ॥ ३० ॥ त्रयोऽभिप्लवाः । महाव्रतं चेत्येकत्रिंशद्रात्रः ॥ ३१ ॥ गो आयुषी । त्रयोऽभिप्लवाः—इति द्वात्रिंशद्रात्रः ॥ ३२ ॥ त एतेऽष्टौ न्यायक्लृप्ताः ॥

प्रायणीयः १ । पञ्चाहाभिप्लवास्त्रिरावृत्ताः १५ । विश्वजिदतिरात्रः १ । पञ्चाहाभिप्लवः ५ । दशरात्रः १० । उदयनीयः १ इत्येवं त्रयस्त्रिंशद्रात्रो विधीयते ॥ ३३ ॥

अथ ज्योतिः, गौः, आयुरित्येतान्याभिप्लविकानि त्रीण्यहानि ३ । त्रयोऽभिप्लवाः षडहाः १० । महाव्रतं चेति चतुस्त्रिंशद्रात्रः ॥ ३४ ॥ पञ्चाहः ५ । त्रयोऽभिप्लवाः १८ इति पञ्चत्रिंशद्रात्रः ॥ ३५ ॥ चत्वारोऽभिप्लवाः—इति षट्त्रिंशद्रात्रः ॥ ३६ ॥ त एते त्रयो न्यायक्लृप्ताः ॥

प्रायणीयः १ । चतुर्विंशमहः १ । अभिप्लवषडहः ६ । पृष्ठ्यषडहः ६ । नवरात्रः ९ गो आयुषी २ । दशरात्रः १० । महाव्रतम् १ । उदयनीयः १ इति सप्तत्रिंशद्रात्रः ॥

अत्राभिजित्—स्वरसाम—विषुवत्—स्वरसामविश्वजिद्भिर्नवरात्रः संपद्यते । ५२. रात्रस्तु पृष्ठ्यषडहेन छन्दोमत्र्यहेणाविवाक्येन च संपद्यमानो द्वादशाहस्थः ॥ ३७ ।

अथ गो आयुषी । चत्वारोऽभिप्लवाः । इत्यष्टत्रिंशद्रात्रः ॥ ३८ ॥ त्र्यहः । चत्वारोऽभिप्लवाः—इत्येकोनचत्वारिंशद्रात्रः ॥ ३९ ॥ त्र्यहः । चत्वारोऽभिप्लवाः । महाव्रतं चेति चत्वारिंशद्रात्रः ॥ ४० ॥ त एते त्रयो न्यायक्लृप्ताः । तदित्थं वैशेषिकाणि च न्यायक्लृप्तानि चेत्येवं कृत्वा विभक्तान्येकोत्तराणि सत्राणि दर्शितानि ॥ अत ऊर्ध्वं त्रीणि वैशेषिकाणि भवन्ति तान्युदाहरामः ॥

प्रायणीयः । चतुर्विंशमहः । त्रयोऽभिप्लवाः । नवरात्रः । अभिप्लवः । गो आयुषी । दशरात्रः । महाव्रतम् । उदयनीयः—इत्येष एकोनपञ्चाशद्रात्रः । स एष संवत्सरसत्रधर्म्मैर्यु क्त इत्यतः संवत्सरसम्मित उच्यते ॥ ४९ ॥ अथैतस्मिन्नेकोनपञ्चाशद्रात्रे यो नवरात्रः, तमुभयतः पृष्ठ्यावनुलोमप्रतिलोमौ संनिवेश्यौ । तथा चैकषष्टिरात्रः संपद्यते । अनुलोमपृष्ठ्यस्त्रिवृदारम्भणस्त्रयस्त्रिंशपर्य्यवसानः । स नवरात्रात् प्राग् विधीयते । यस्तु त्रयस्त्रिंशारम्भणस्त्रिवृत्पर्य्यवसानः स प्रतिलोमः । स नवरात्रादुपरिष्टाद्विधीयते ॥ अन्यत् समानम् ॥ ६१ ॥ प्रायणीयः १ । आभिप्लविकस्त्र्यहः ३ । अभिप्लवाश्चतुर्दश १४ । दशरात्रः १० । महाव्रतम् १ । उदयनीयः १ । इतीत्थं न्यायक्लृप्तः शतरात्रः १०० ॥ तदित्थं द्वात्रिंशदेतानि रात्रिसत्राणि व्याख्यातानि ॥ ३२ ॥

इति रात्रिसत्रपरिचयः ।

अथ अयनसत्राणि ३५

गवामयनम्, आदित्यानामयनम्, अङ्गिरसामयनम्—इति त्रीणि मुख्यानि ज्योतिषामयनानि ॥ ३ ॥

नाक्षत्रं, चान्द्रं, तैर्य्यगयनम्—इति त्रीणि गौणानि ज्योतिषामयनानि ॥ ३ ॥ तत्रैतद् गवामयनमष्टविकल्पं नाक्षत्रं तु द्विविधम् ॥ इति चतुर्दशैतानि भवन्ति ॥ हंसदामयनम्, उत्सर्गिणामयनम्, अभिप्लवायनम्—इत्येतानि त्रीणि वैकारिकाणि गवामयनानि ॥ ३ ॥ कौण्डपायिनामयनम्, दृतिवातवतोरयनम्, सर्पसत्रम्—इत्येतानि त्रीणि वैशेषिकाणि ॥ ३ ॥ तापश्चितम्, क्षुल्लकतापश्चितम्, महातापश्चितम्—इति त्रीणि तापश्चितानि ॥ ३ ॥ बहुसांवत्सरिकम्, प्रजातिकामानामयनम्, प्रजापतेरयनम्, शाक्त्यानामयनम्, साध्यानामयनम्, विश्वसृजामयनम्, अग्नेः सहस्रसाव्यं सत्रम्, प्रजापतेरयनम्—इत्येतान्यष्टौ बहुसांवत्सरिकाणि ॥ ८ ॥ मित्रावरुणयोरयनम्, इन्द्राग्न्योरयनम्, अर्य्यमायणम्—इति त्रीणि सारस्वतानि ॥ ३ ॥ दार्षद्वतं एकम् ॥ १ ॥ इत्येवमेतानि कल्पोक्तानि पञ्चत्रिंशदयनसत्राणि ॥ ३५ ॥

तत्र गवामयने नाम संवत्सरसत्रेऽहर्गणाः प्रदर्श्यन्ते । शारदविषुवद्दिनमारभ्य शारद-

विषुवद्दिनपर्यन्तमह्नां षट्त्र्युत्तरं त्रिशतं साध्येऽस्मिन् सत्रे प्रायणीयोऽतिरात्रः प्रथममहः । चतुर्विंशस्तोममुक्थ्यं द्वितीयमहः तदारम्भणीयम् ॥ अथातः परे चत्वारोऽभिप्लवाः पृष्ठ्यपञ्चमाः प्रथमो मासः ॥ एवं द्वितीयतृतीयचतुर्थपञ्चमा मासाः संपाद्याः ॥

ततस्त्रयोऽभिप्लवाः पृष्ठ्यचतुर्थाः ॥ ० ॥ ततोऽभिजिदेकम्, स्वरसामानस्त्रयः, विषुवदेकं, स्वरसामानस्त्रयः, विश्वजिदेकम्, इत्येतैर्नवभिरग्निष्टोमैर्नवरात्रम् ॥ ० ॥ ततः पृष्ठ्यपूर्वास्त्रयोऽभिप्लवाः ॥ तेन विषुवदह्नं दिवाकीर्त्यस्तोममभितोऽष्टाविंशिनौ मासौ षष्ठसप्तमौ संपद्येते । विषुवांस्तु नावरेषां न परेषामित्याहुः कौषीतकिनः ( २६ । १—२ ) ॥ ० ॥ ततः पृष्ठ्यापूर्वाश्चत्वारोऽभिप्लवा अष्टमो मासः । एवं नवमदशमैकादशा मासाः संपाद्याः ॥ ० ॥ ततस्त्रयोऽभिप्लवाः ॥ ० ॥ ततो गौरायुरिति द्व्यहमुक्थ्यम् ॥ ततः पृष्ठ्यच्छन्दोमाविवाक्यात्मको दशाहः ॥ ततः पञ्चविंशस्तोमं महाव्रतं नामोपान्त्यमहः ॥ तत उदयनीयोऽतिरात्रः सर्वान्त्यमहः ॥ ० ॥ तदित्थमिह संवत्सरे षष्टिः षडहा भवन्ति । एकश्चातिरिक्तो विषुवान्, स आत्मा ॥ अपि वा अस्मिन् संवत्सरे द्वावतिरात्रस्तोमौ २ । शतं च षट् चाग्निष्टोमाः १०६ ॥ चत्वारिंशे द्वे शते उक्थ्यस्तोमाः २४० ॥ द्वादश तु षोडशिस्तोमाः १२ ॥ इत्थमह्नां षट्त्र्युत्तरत्रिशतो संपद्यते । तथा चोक्तं वैतानकल्पे—

> द्वावतिरात्रौ, षट् शतमग्निष्टोमा, द्वे विंशतिशते उक्थ्यानाम् ।
> द्वादश षोडशिनः, षष्टिः षडहा, वैषुवतं चेति ॥ १ ॥

तदिदं गवामयनं द्वेधा—द्वादशमाससाध्यं दशमाससाध्यं चेत्याहुः । लाट्यायनः पुनरस्याष्टौ विकल्पानाह । तथाहि—सर्वाण्यहानि ज्योतिष्टोमेनैव साध्यानीत्येकः ॥ १ ॥ अतिरात्रोक्थाभ्यामुपक्रान्तस्य महाव्रतातिरात्राभ्यां संस्थितस्य अभिजित् स्वरसाम विषुवत् स्वरसाम विश्वजिद्भिर्नवरात्रं मध्ये कृत्वा शेषाण्यहानि ज्योतिष्टोमाः कार्या इत्येकः ॥ २ ॥ गो आयुषी पृष्ठ्याभिप्लवौ, दशरात्रं चाधिकं, शेषाणि ज्योतिष्टोमाः—इत्येकः ॥ ३ ॥ अभिजित् पृष्ठ्यस्वरसाम विषुवत् स्वरसाम पृष्ठ्यविश्वजिद्भिर्मध्ये एकविंशतिरात्रमित्येकः ॥ ४ ॥ अभिजितः स्वस्थाने विश्वजितं कृत्वा विश्वजितः स्थानेऽभिजितं कुर्य्यादित्येकः ॥ ५ ॥ अथोत्तरे पक्षसि विषुवद्दिनादारभ्य यत् प्रातिलोम्यं विहितं तदपि द्वेधा विकल्प्यते । केचिदहरावर्तकारिणो भवन्ति । तेऽभिप्लवो क्रमान् पृष्ठ्यावसानानेव मासान् कुर्वाणास्तानहःप्रतिमान् कुर्वन्ति स एको विकल्पः ॥ ६ ॥ परे तु मासावर्तकारिणः पृष्ठ्योपक्रमानभिप्लवावसानान् मासान् कुर्वाणास्तत्राहान्यानुलोम्येनैवाचरन्ति स एको विकल्पः ॥ ७ ॥ ( गो आयुषी च

ते विपर्यासयन्ति ) ॥ दशरात्रमप्येके आवर्तयन्ति स एकः ॥ ८ ॥ तदित्थमष्टौ गवामयनविकल्पा भवन्ति ॥ ० ॥ ० ॥

आदित्यानामयने शांखायनः प्राह । विषुवतः पूर्वस्मिन् पटले एकस्मिन्नहनि त्रिवृत् । परस्मिन् पञ्चदश इत्येवमहर्व्यत्यासेनाभिप्लवस्तोमौ कार्यौ विषुवत् उत्तरस्मिंस्तु पटले पञ्चदशत्रिवृतावभिप्लवस्तोमौ । मासास्तु मध्ये पृष्ठ्याः कार्य्याः । षष्ठे मासि त्रयोऽभिप्लवाः पृष्ठ्यचतुर्थाः । नवरात्रे त्वभिजितः स्थाने बृहस्पतिसवः । विश्वजितः स्थाने त्रिन्द्रस्तोमः । ततः पृष्ठ्याभिप्लवौ । ततो व्यूढच्छन्दा दशरात्रस्त्रिवृत्स्तोमोऽग्निष्टोमसंस्थः तत उद्भिद्बलभिदौ । इत्थं सप्तमो मासः । ततो मध्ये पृष्ठ्याश्चत्वारो मासाः । मध्ये पृष्ठ्यावभिप्लवौ । गो आयुषी । छंदोमदशाहश्चेति द्वादशो मासः ॥ ० ॥ इत्यादित्यानामयनं नाम ज्योतिषामयनम् ॥ ० ॥

अङ्गिरसामयने तु त्रिवृदभिप्लवस्तोमः । पृष्ठयारम्भणाः पूर्वस्मिन् पटले मासाः, पृष्ठ्योदयास्तूत्तरस्मिन् । आयुर्गौः । शेषमादित्यानामयनवत् ॥ ० ॥ इत्यङ्गिरसामयनम् ॥

इति मुख्यानि ज्योतिषामयनानि ।

अथ ज्योतिषामयनविकल्पा नाक्षत्रचान्द्रसौरा लाट्यायनद्राह्यायणाभ्यामुक्ताः । तथाहि—ये ते त्रिंशिनः सावना अयनमासाः कल्पिताः, तेषामेकैकस्मिन्मासि आद्यस्याभिप्लवस्य स्थाने त्रिकद्रुकाः कार्य्याः । ज्योतिर्गौरायुरित्याभिप्लविकस्त्र्यहस्त्रिकद्रुकः । उत्तरे तु पक्षस्यन्त्यस्याभिप्लवस्य स्थाने त्रिकद्रुकस्त्र्यहः । तदित्थं सप्तविंशिनो नाक्षत्रा मासाः—इत्यतः षट्त्रिंशदूनो नाक्षत्रः संवत्सरः ( ३२४ ) ॥ तदिदमेकं नाक्षत्रं ज्योतिषामयनम् ।

षष्ठस्य मासस्य य आद्योऽभिप्लवः, तस्य स्थाने ज्योतिर्गौश्च स्यातां न त्वन्यानि चत्वारि ॥ उत्तरे तु पक्षसि सप्तममासस्य योऽन्त्योऽभिप्लवः, तस्य स्थाने ज्योतिरेवैकमहः स्यान्न त्वन्यानि पञ्च । तदित्थं सावनात् संवत्सरान्नवभिरहोभिरूनः ( ३५१ ) स नाक्षत्र एव संवत्सरो भवति त्रयोदशमासात्मकः । तदिदं द्वितीयं नाक्षत्रं ज्योतिषामयनम् ।

द्वितीयचतुर्थषष्ठेषु युग्ममासेषु प्रथमस्याभिप्लवस्य स्थानेऽभिप्लवपञ्चाहः । उत्तरे पक्षसि त्वष्टमादिमासेष्वन्तिमस्याभिप्लवस्य स्थाने पञ्चाहः । तदित्थं षड्भिरहोभिः सावनसंवत्सरादूनश्चान्द्रमसः संवत्सरः ( ३५४ )॥ एषा हि चान्द्रमसी गतिः ॥ ० ॥ इति चान्द्रं ज्योतिषामयनम् ॥ ० ॥

अथ षष्ठमासस्यादौ त्रिकद्रुकानभिप्लवं चोपदध्यात् । सप्तममासस्यान्तेऽभिप्लवं त्रिकद्रुकांश्चोपदध्यात् । तदित्थं नवभिः पूर्वपक्षसि, नवभिरेवोत्तरपक्षसीत्यष्टादशभिरधिकोऽयमादित्यः संवत्सरः । स तैर्य्यगयनिकः । तिरश्ची हि गतिरान्तरिक्षी दृश्यते

अन्य च पौर्णमास्यां प्रसवः ॥ इति तैर्य्यगयनम् नाम ज्योतिषामयनम् ॥ अत्राष्टादशादिनाधिकत्वं लाट्यायनोक्तं चिन्त्यम् । अष्टादशदिनाधिकस्य संवत्सरस्याप्रसिद्धेः । त्रिकद्रुकानभिप्लवमित्यभिप्लवपदस्य त्रिकद्रुकपरिचायकत्वाभ्युपगमे त्रीण्येव पूर्वपक्षसि त्रीण्युत्तरपक्षसीत्येवं षड्भिरेवाधिकः त्रिशत्युत्तरषट्षष्टिदिनात्मकः सौरः संवत्सरो विवक्षितः स्यादिति मन्यामहे ॥ ० ॥

इति गौणानि ज्योतिषामयनानि ।

अथान्ये गवामयनविकारा भवन्ति । यान्यहानि दर्शपूर्णमासाभ्यां यजनीयदिवसाभ्यां संनिपतेयुः—तान्युत्सृजेत् । तदिदं संसदामयनम् ॥ अथवा पौर्णमासीभिरेव यानि सुत्यान्यहानि संगच्छेयुस्तान्येवोत्सृजेत् । अत्र पौर्णमासीशब्दो यजमानायाहर्वचनः—इति शांखायनभाष्यकारः ॥ इत्युत्सर्गिणामयनम् ॥ ० ॥ अथ दशरात्रे यः पृष्ठ्यः तं वर्जयित्वा गवामयने यावन्तः पृष्ठ्याः, तेषां स्थानेऽप्यभिप्लवाः कार्य्याः । तदिदमभिप्लवायनं नाम संवत्सरसत्रम् ॥ ० ॥ तान्येतानि त्रीणि वैकारिकाणि गवामयनानि ॥०॥ उपसद्भिश्चरित्वा सुत्यास्थानेषु तन्त्रवत् सायं प्रातर्होमक्रमतो मासमग्निहोत्रं जुहोति ॥ १ ॥ दर्शपूर्णमासाभ्यामेकतन्त्रक्रियया मासमुपैति ॥ २ ॥ ततश्चातुर्मास्यपर्वणां वैश्वदेव—वरुण प्रघास—साकमेध—शुनासीरीयाणामेकैकेन मासं मासमुपैति ॥ तेन षण्मासाः संपन्नाः ॥ ६ ॥ अथ मासं त्रिवृता, मासं पञ्चदशेन, मासं सप्तदशेन, मासमेकविंशेन, मासं त्रिणवेनोपैतीत्येकादशमासाः संपद्यन्ते ॥ ११ ॥ उत्तमे तु मासेऽष्टादशाहं त्रयस्त्रिंशस्तोमेनोपैति । ततो दशाहः । ततो महाव्रतमहः । ततोऽतिरात्रम्—इतीत्थं संवत्सरः पूर्य्यते ॥ अत्र यो होता सोऽध्वर्य्युः स पोता । यो मैत्रावरुणः स ब्रह्मा स प्रतिहर्त्ता । य उद्गाता सोऽच्छावाकः स नेष्टा । यः प्रस्तोता स ब्राह्मणाच्छंसी स ग्रावस्तुत् । यः प्रतिपस्थाता सोऽग्नीत् स उन्नेता । सुब्रह्मण्यः सुब्रह्मण्यः । गृहपतिर्गृहपतिः ॥ तदिदं कौण्डपायिनामयनम् ॥ ० ॥

अथ त्रिवृदादीनां पृष्ठ्यस्तोमसंस्थानामेकैकेन मासं मासमुपैति । तेन पूर्वाः षण्मासाः संपन्नाः ॥ ततो विषुवतः स्थाने महाव्रतम् ॥ तत आवृत्तानां पृष्ठ्यस्तोमानामेकैकेन मासं मासमुपैति । यथा मासं त्रयस्त्रिंशेन, मासं त्रिणवेन, मासमेकविंशेन, मासं सप्तदशेन, मासं पञ्चदशेन, मासं त्रिवृता—इत्येवं विपर्य्यस्तक्रमेणोत्तराः षण्मासाः संपद्यन्ते ॥ तदित्थं द्वादशमासाः क्रियन्ते—इति दृतिवातवतोरयनम् ॥ ० ॥

अथ सर्पसत्रम्—तच्चातिरात्रोपक्रममतिरात्रसंस्थम् । मध्ये तु सर्व एवाग्निष्टोमसंस्था दिवसाः । प्रत्यहमस्य दशकाः स्तोमा भवन्तीत्यतोऽयं दशदशी संवत्सरः । अत्र यो विषुवान् स द्वादशीकः । द्वादशकैः स्तोमैर्युक्तत्वात् ॥ इति सर्पसत्रम् ॥ ० ॥ ० ॥

इति वैशेषिकाणि संवत्सरसत्राणि ।

अथ चतुरो मासान् दीक्षाभिः, चतुरो मासानुपसद्भिः, चतुरो मासान् सुत्याभिरुपैति । यादृशौ गवामयनस्य प्रथमोत्तमौ मासौ तादृशावस्यापि । तद्वद् विषुवांश्च, विषुवन्तमुभयतोऽष्टाविंशिनौ मासौ च । तदिदं क्षुल्लकतापश्चितं नाम सांवत्सरिकं सत्रम् ॥ ० ॥ यत्र तु संवत्सरं दीक्षाः, संवत्सरमुपसदः, संवत्सरं सुत्याः--तत् तापश्चितं नाम त्रैवार्षिकं सत्रम् ॥ ० ॥ अथ यदि त्रीन् संवत्सरान् दीक्षाः । त्रीन् संवत्सरानुपसदः । त्रीन् संवत्सरान् सुन्वन्ति—तदिदं नवसांवत्सरिकं महातापश्चितं सत्रम् ॥

इति तापश्चितानि ।

बहुसंवत्सरे सत्रे गवामयनस्याभ्यासः कार्य्यः । अथवा संहार्य्यान् मासान् परिहाप्य बहुसंवत्सरे गवामयनाभ्यासः कार्य्यः । प्रथमषष्ठसप्तमोत्तमा मासाः संहार्य्याः । तत्रैकाहानां संहारात् ॥ इति बहुसंवत्सरसत्राणि ॥ ० ॥ अथातिरात्रसंस्थंप्रथममहः । ततः सहस्रसंख्यान्यहानि छन्दोगवशेन । ततोऽतिरात्रसंस्थमुत्तममहः ॥ तदेतदग्नेः सहस्रसाव्यं सत्रम् ॥ ० ॥ अथ गवामयनं प्रथमः संवत्सरः । आदित्यानामयनं द्वितीयः संवत्सरः । अङ्गिरसामयनं तृतीयः संवत्सरः । एवं त्रिसांवत्सरं प्रजातिकामानामयनम् ॥ ० ॥ अथ त्रीन् संवत्सरान् त्रिवृत् स्तोमेन, त्रीन् पञ्चदशेन, त्रीन् सप्तदशेन, त्रीनेवैकविंशेन—इत्येवं त्रिवृदादीनां चतुर्णां पृष्ठ्यस्तोमानामेकैकेन त्रींस्त्रीन् संवत्सरानुपैति । तद् द्वादश संवत्सरं प्रजापतेरयनम् ॥ ० ॥ एतेषामेवैकैकेन नव नवसंवत्सरानुपैति ; तत् षट् त्रिंशत् संवत्सरं शाक्त्यानामयनम् ॥ ० ॥ एतेषामेवैकैकेन पञ्चविंशतिः पञ्चविंशतिः संवत्सराः—इति शतसंवत्सरं साध्यानामयनम् ॥ ० ॥ एतेषामेवैकैकेन पञ्च पञ्च पञ्चाशतः २५० संवत्सराः—इति सहस्रसंवत्सरं विश्वसृजामयनम् ॥ ० ॥ अतिरात्रः । सहस्रं त्रिवृतः संवत्सराः । अतिरात्रः । एवं सहस्रसंवत्सरं प्रजापतेरयनम् ॥ ० ॥

इत्यष्टौ बहुसांवत्सरिकाणि ।

अत्रेदं तापश्चितब्राह्मणे शतपथे श्रूयते । देवाः खलु सहस्रसंवत्सराय दिदीक्षिरे न मनुष्यः सहस्रसंवत्सरेण यष्टुमीष्टे । तदर्थं देवाः पञ्चैव यज्ञप्रतिनिधीनञ्जःसवानन्वकल्पयन् । तापश्चितं, संवत्सरं, द्वादशाहं, पृष्ठ्यषडहं, विश्वजितं चेति ॥ तत्र सहस्रसंवत्सरस्थाने तापश्चितं नाम त्रैसांवत्सरिकं सत्रं कुर्य्यात् । तापश्चितस्थाने संवत्सरसत्रं कुर्य्यात् संवत्सरसत्रस्थाने द्वादशाहं कुर्य्यात् ॥ द्वादशाहस्थाने पृष्ठ्यं षडहं कुर्य्यात् ॥ पृष्ठ्यं षडहस्थाने सर्वपृष्ठमेकाहं विश्वजितमेव कुर्य्यादिति । एका-

हेन षडहः, षडहेन द्वादशाहः, द्वादशाहेन संवत्सरः, संवत्सरेण त्रैसांवत्सरिकः। त्रैसांवत्सरिकेण सहस्रसंवत्सरः कृतो भवति । तेनैतस्य सहस्रसंवत्सरस्य स्थाने तापश्चितं कुर्य्यादिति न व्यर्थस्तदुपदेशः ॥ तत्र संवत्सरं दीक्षाभिरेति, संवत्सरमुपसद्भिः, संवत्सरं सुत्याभिः । तेनेदं क्रमेण सहस्रसंवत्सरस्य तस्य पूर्वार्द्धं मध्यमुत्तरार्द्धं चावरुन्धे ॥ तेनैवेदं त्रयं सह क्रियते—अग्निः, अर्क्यं, महदुक्थमिति । दीक्षाभिरग्निराप्यते, उपसद्भिरर्क्यं, सुत्याभिस्तु महदुक्थम् ॥ तदित्थमेष तापश्चितः सहस्रसंवत्सरस्य प्रतिमा भवति ॥ तस्याशीतमह्नां सहस्रं भवति । तथा चैकाहः संवत्सरस्य प्रतिमा संपद्यत इत्यनुसंधेयम् ॥

अतिरात्रः प्रथमाहः । शुक्ले शुक्ले पक्षऽभिजित् । कृष्णे कृष्णे तु विश्वजित् । पूर्णिमासु गोष्टोमाः । अमास्वायुष्टोमाः । एवं विषुवतः पूर्व पक्षसि क्रियते । उत्तरे तु विपर्य्यासात् । शुक्ले विश्वजित् कृष्णेऽभिजित् ॥ पूर्णिमास्वायुष्टोमाः, अमासु गोष्टोमाः ॥ उत्तमाहश्चातिरात्रः ॥ इतीन्द्राग्न्योरयनम् ॥ ० ॥ अतिरात्रः प्रथमाहः । ततो ज्योतिष्टोम—गोष्टोमायुष्टोमा दण्डकलितवदावर्त्येरन् । पूर्णिमासु विश्वजितः । अमास्वभिजितः । उत्तरे तु पक्षसि विपर्य्यासेनैते कार्य्याः ॥ उत्तमाहश्चातिरात्रः ॥ ० ॥ इत्यर्य्यम्णोऽयनं भवति ॥ ० ॥ सरस्वती नाम नदी ब्रह्मावर्तदेशस्य पश्चिमा सीमा । तस्या विनशनप्रदेशे ह्येतेषां पुरा दीक्षा विहिता । तेनैतानि त्रीणि सारस्वतान्ययनानि ॥ ० ॥

अथ दृषद्वतीनाम नदी ब्रह्मावर्तदेशस्य पूर्वा सीमा। तस्या आसन्ने प्रदेशे ब्राह्मणस्य ऋत्विज आचार्य्यस्य वा गाः संवत्सरं रक्षेत् । ततः संवत्सरं व्यर्णे नैतधवे स्थाने प्रज्वलितमग्निं धारयेत् ॥ दृषद्वत्याः संनिहितं नैतंधवं नाम किञ्चिन्निर्जलं स्थानमस्ति तत्रैतमग्निमिन्धे ॥ अथ तृतीये संवत्सरे परीणहित्स्थानेऽग्नीनाधाय, दर्शपूर्णमासान्तं कर्म कृत्वा सरस्वतीदृषद्वतीसंगमस्थानात् प्रस्थितो दृषद्वत्या दक्षिणेन तीरेण गच्छन् यमुनायास्त्रिः प्लक्षातीर्थप्रदेशमवभृथस्नानार्थमभ्यवैति ॥ तदिदं त्रिसंवत्सरं दार्षद्वतं नाम सत्रम् ॥ ० ॥ ० ॥ तदित्थं पञ्चत्रिंशदेतान्ययनसत्राणि व्याख्यातानि ॥ ३५ ॥

**इत्ययनसत्रप्रचयः ।**

**अथ महासत्राणि ।**

यावदायुषं कर्तव्या नित्या यज्ञा महासत्राणि तत्रेयं शातपथी श्रुतिः—"पञ्चैव महायज्ञाः, तान्येव महासत्राणि । भूतयज्ञो, मनुष्ययज्ञः, पितृयज्ञो, देवयज्ञो, ब्रह्मयज्ञ" इति ॥ अहरहर्भूतेभ्यो बलिं हरेत् स भूतयज्ञः । अहरहर्दद्यादोदपात्रात् स मनुष्य-

यज्ञः । अहरहः स्वधा कुर्य्यादोदपात्रात् स पितृयज्ञः अहरहः स्वाहा कुर्य्यादाकाष्ठात् स देवयज्ञः ॥ अथ स्वाध्याय एव ब्रह्मयज्ञः । तस्य वागेव जुहूः । मन उपभृत् । चक्षुध्रुवा । मेधा स्रुवः । सत्यमवभृथः । स्वर्गो लोक उदयनम् ॥ यावन्तं खल्विमां वित्तेन पूर्णां पृथिवीं ददल्लोकं जयति त्रिस्तावन्तं जयति । भूयांसं चाक्षय्यं य एवं विद्वानहरहः स्वाध्यायमधीते । तस्मात् स्वाधायोऽध्येतव्यः ॥ एषु च बहुकालसाध्यत्वात् सत्रशब्दः प्रवर्तते । सत्रशब्दसाधर्म्याच्चैषामेषु सोमेषु प्रवेश इत्यवधेयम् ॥ इति महासत्रप्रचयः ॥ ० ॥

सर्वेऽप्येते सोमयज्ञास्त्रिविधा—नित्या नैमित्तिकाः काम्याश्च । ये स्वतन्त्राः कर्तव्यत्वेनादिष्टास्ते नित्याः । यत्र सोमविशेषं कृत्वा परे यज्ञा विधीयन्ते यत्र वा यज्ञान्तरं कृत्वा सोमविशेषा विधीयन्ते तत्र ते यज्ञान्तरसाहचर्य्यक्लृप्ताः सोमा नैमित्तिकाः ॥ यत्र त्वैहिकमामुष्मिकं वा फलमुद्दिश्य सोमाः क्रियन्ते तत्र काम्याः एकाहाः काम्या अहीनाः काम्यसत्राणि ।

अथाहुः—काम्याः सोमा द्विविधाः आदिष्टसोमाः प्राक्सौमिकाश्च । तत्रैकाहाहीनसत्राणि आदिष्टसोमाः । अथ वक्ष्यमाणाः सर्वे हविर्यज्ञाः फलविशेषमुद्दिश्य सौम्येन कल्पेन क्रियमाणाः प्राक्सौमिकाः काम्यसोमाः भवन्ति ॥

इति सोमयज्ञाः संपूर्णाः ॥ १६८ ॥

अथ सुराप्रचारः सौत्रामणीनाम यज्ञः ॥ सौत्रामणी द्विविधा—कौकिली चरका च । "यजेत् सौत्रामण्यामपत्नीकोऽप्यसोमपः"—इत्यैतरेयोक्तेरपत्नीकेनाप्यसोमपेनापि यजमानेन कर्तव्या या स्वतन्त्रा सा कौकिली *। "अग्निं चित्वा वाजपेयेनेवाष्ट्वा सौत्रामण्या† यजेत"; "एतया राजसूययाजी यजते"‡—इत्यादिष्वङ्गत्वेन श्रूयमाणा चरका ।

अत्र चरकायाः सौत्रामण्या हविर्यज्ञत्वमपोच्छन्ति । तदभिप्रायेणैव सप्तसंस्थेषु हविर्यज्ञेषु सौत्रामण्याः प्रवेशः ॥ ० ॥ इति सौत्रामणी ॥ ० ॥

इति महायज्ञाधिकारः ॥ ३ ॥

---

* शतपथे आपस्तंबे । † आपस्तम्बे । ‡ शतपथे ।

## अथ पूर्वप्रतिज्ञाता सामक्लृप्तिरत्र प्रदर्श्यते

सामक्लृप्तिः

( १ ) उद्गीथरसाचलन्वो वागध्यूढः प्राणः साम ॥ १ ॥ वाक्प्राणमनोभिरारब्धं खल्विदमेकैकं सकलं सत्यम् ॥ तत्रेयं वाग् मा प्रमा प्रतिमा प्रभृतिच्छन्दः प्रभेदानां मध्यतः केनचिच्छन्दसा छन्दिता सती ऋगित्युच्यते । ऋच्यध्यूढः प्राण एवायं वितायमानः सामाख्यां लभते । तयोश्च ऋक्सामयोरारम्भणं प्रणवः प्रतिष्ठा च प्रणवः । अथ साम्नस्तु ऋगध्यूढस्य मध्यमा भक्तिरुद्गीथः । वाक्प्राणावृक्सामे उद्गीथेऽस्मिन्नक्षरे संसृज्येते ॥ १ ॥

( २ ) सर्वत्रैव तु ते ऋक्सामे अन्योन्यमविनाभूते भवतः । तद्यथा—इयं पृथ्वी ऋक्—तत्राध्यूढोऽयमग्निः साम । अन्तरिक्षमृक्—वायुः साम । द्यौरृक्—आदित्यः साम । नक्षत्राणि ऋक्—चन्द्रमाः साम । ऋच्यध्यूढं साम गीयते ॥ आदित्यस्य शुक्ला भा ऋक्—तत्र नीलं परः कृष्णं साम । या चेयमक्ष्णः शुक्ला भाः सा ऋक्—अथ यन्नीलं परः कृष्णं तत् साम । ऋच्यध्यूढं सामगीयते ॥ २ ॥

( ३ ) ऋचमनु सामेदं शश्वत् साध्वेवानुवर्तते नत्वेव जात्वेतामृचमात्मानमतिपातयति । तस्मात् साधुनि साधुत्वे च सामशब्दः; असाधुनि चासाधुत्वे च तद्वदसामशब्दोऽभिनिवतते । अपिचेदमृचि साम्येन सामानुवर्तते यावतीयमृक् तावदेवेदं सामापि तत्राभिव्याप्नोति । तस्मात् सामनाम । अथ ऋगायतनापेक्षया वितायमानत्वाद् बृहदायतनमपीदं साम संमितमृचांशैर्भवति तस्मात् सामनाम । "ऋचा समं मेने"—इति नैदाना इत्याह यास्को निरुक्ते ( दै० ७ । १२ । ४ ) तिसृभिर्ऋग्भिः समं सामेत्याहुः । विष्कम्भस्य हि ऋक्त्वमभिप्रयन्ति । पृष्ठस्य च सामत्वम् । विष्कम्भत्रयसमं हि तत्पृष्ठं भवतीति त्र्यृचं सामोपपद्यते ॥ ३ ॥

( ४ ) साम देवानामन्नमिति ताण्ड्यम् । ६ । ४ । १३ ।
अथ लोके सौन्दर्य्यं द्विविधं भवति—भगः सामेति । यत्रेतरानपेक्षं प्रातिस्विकं सौन्दर्य्यं तत् भगनिबन्धनं सौभगं नाम ।
अथ यत्र तु शिल्पादावितरेणानुरूप्यं प्रातिरूप्यं वा तद्धेतुस्तत्रेदं सामैव मनोहरतीति विद्यात् ॥ ४ ॥

( ५ ) तस्यैतस्य साम्नः पञ्च भक्तयो भवन्ति । हिंकारः । प्रस्तावः । उद्गीथः । प्रतीहारः ।

निधनम्। इति। संतानारम्भणं वितानोपक्रमणं वा हिंकारः। उद्ग्राभनिग्राभयोरभिक्रान्तापक्रान्तयोरुत्थानपतनयोऽर्यवच्छेदकं मध्यमं पदमुद्गीथम्। यत्रोपसंहारोऽवसायस्तन्निधनम्। हिंकारं चोद्गीथं चान्तरा भक्तिः प्रस्तावः। उद्गीथं च निधनं चांतरा भक्तिः प्रतीहारः। केचित्तु—हिंकारोद्गीथयोर्गर्भे प्रस्ताव आदिरिति द्वे, उद्गीथनिधनयोर्गर्भे प्रतीहार उपद्रव इति द्वे—इत्थं सप्तभक्तिकं सामाचक्षते। तत्रैतयोर्न विशेषः। वियत्ताधीनत्वान् भक्तीनाम्॥ ५॥

(६) अनन्तविधान्यन्नानि चेमानि सामानि। तानि त्रेधा विभज्यन्ते निरूढानि निगूढानि प्राकृतानि चेति। सुप्रसिद्धं याज्ञिकं निरूढम्। काम्यं विद्वद्भिः प्रक्लृप्तं निगूढम्। लौकिकं पारिप्लवं प्राकृतम्॥ ६॥

(७) तत्र सप्त चतुर्दश वा निरूढानि। रथन्तरं[१] पृथिव्याः। बृहद्दिवः[२]। वामदेव्यमन्तरिक्षस्य[३]। राजनं चन्द्रमसः[४]। प्राणमयमग्नेः[५]। वाङ्मयं प्रजापतेः। सर्वमिति सर्वेषाम्। तत्र देवरथो वै रथन्तरम् (तां० ७। ७। १३)। तमनुष्टौति ताण्ड्यः। ७। ७। १६।

यस्ते गोषु महिमा यस्ते अप्सु रथे वाते स्तनयित्नौ य उ ते
यस्ते अग्नौ महिमा तेन संभवरथन्तर द्रविणवन्न एधि॥ ७। ७। १६॥

(८) रथन्तरं[१] वैरूपं शाकरमिति। त्रीणि रथन्तरस्य रूपाणि। अभिमन्थनं धूमः प्रज्वलनमङ्गारा उपशम इति—अग्नौ प्रोतं रथन्तरम्। अभ्रसंप्लवो मेघो वर्षा विद्योतते उद्गृह्णातीति पर्जन्ये प्रोतं वैरूपम्। पृथिव्यन्तरिक्षं द्यौर्दिशः समुद्र इति लोकेषु प्रोताः शाकर्य्यः॥

(४) (५) (६)

बृहद् वैराजं रैवतमिति त्रीणि बृहतो रूपाणि। उद्यन्-उदितः मध्यन्दिनः, अपराह्णः, अस्तंयन्निति बृहदादित्ये प्रोतम्। वसन्तो ग्रीष्मो वर्षाः शरद्धेमन्तः इति पञ्चर्तवो वैराजमृतुषु प्रोतम्॥ अजाः। अवयः। गावः। अश्वाः। पुरुषः—इति पञ्च पशवो रेवत्यः पशुषु प्रोताः॥ ०॥

(९) पशवो वै बृहद्रथन्तरे। (तां० ७। ७। १) रथन्तरो रथघोषवत्। बृहदिदं स्तनयित्नोर्घोषवत्। दुन्दुभिघोषवद्वा। वैरूपं वातघोषवत्। वैराजमग्निघोषवद् + अग्निमन्थनघोषवद्वा। शाकरीरपां घोषवत्। रेवतीर्गवां घोषवत्। एतैर्वा एतानि सहघोषैरसृज्यन्त। (तां० ७। ९। १४)

(१०) १ ऐरं बृहत्—ऐडं रथन्तरम्
२ मनो बृहत्—वाग् रथन्तरम्
३ साम बृहत्—ऋग् रथन्तरम्
४ प्राणो बृहत्—अपानो रथन्तरम्
५ असौ लोको बृहत्—अयं रथन्तरम्
एतानि मनसाऽवीदयोद्गायेत् ॥

( ११ ) अथ वामदेव्यं पशवः। अपृष्ठं वै वामदेव्यमनिधनं ह्यीति। अनायतनं वा एतत् साम यदनिधनम्। तद्यथा—उपमन्त्रयते ज्ञपयते स्त्रिया सह शेते प्रतिस्त्रीसह शेते कालं गच्छतीति वामदेव्यं मिथुने प्रोतम्। निधनवत्तु राजनं सौम्यम्। तद्यथा—अग्निः वायुः आदित्यः। नक्षत्राणि चन्द्रमा इति देवतासु प्रोतम्।

( १२ ) गायत्रं परोवरीयश्चेति द्वे सामनी प्राणमये भवतः मनो वाक् चक्षुः श्रोत्रम् प्राण इति गायत्रं प्राणिषु प्रोतम्। अथ प्राणो वाक् चक्षुः मन इति परोवरीयः साम। परोवरीयांसि ह्येतानि ॥

( ११ ) ( १२ ) ( १३ )

( १३ ) वारवन्तीयं श्रायन्तीयं यज्ञायज्ञीयमिति त्रीणि प्राजापत्यानि। तत्र एकविंशान्तं वारवन्तीयं, त्रयस्त्रिंशान्तं श्रायन्तीयं, चतुस्त्रिंशान्तं यज्ञायज्ञीयम्। माएड्यश्रुतिराह—अश्रयन् वाव श्रायन्तीयेन। अवारयन्तं वारवन्तीयेन। इन्द्रियस्य वा एषा वीर्य्यस्य परिगृहीतिः। ( १८। ११। १ ) सर्वाण्यङ्गान्येकं रूपं यज्ञायज्ञीयम्। लोमत्वङ्मांसमस्थिमज्जेति यज्ञायज्ञीयमङ्गेषु प्रोतम्। अपि चाहुः—त्रयी विद्या त्रय इमे लोकाः, अग्निर्वायुरादित्य इत्यमी त्रयो देवाः अथ नक्षत्राणि वयांसि मरीचयः, अथ सर्पाः गन्धर्वाः पितर इति पञ्चभक्तिकमेतत्साम सर्वस्मिन् प्रोतम्। एतस्माद्वै योनेः प्रजापतिर्यज्ञमसृजत। यद् यज्ञे यज्ञमसृजत तस्माद् यज्ञायज्ञीयम्। ( तां० ८। ६। २ )

( १४ ) अथ यदीश्वरस्य विराडात्मनः प्रजापतेः परमं वैश्वरूप्यं तदिदं सर्वसामेति प्रतीयात्। तथा चेमानि सप्तैव सामान्यवान्तरभेदाच्चतुर्दशधोपपद्यन्ते ॥

( १५ ) ज्योतिष्टोमो गोष्टोम आयुष्टोम इति त्रिविधाः स्तोमा भवन्ति। तेष्वग्निष्टोमः उक्थ्यस्तोमः। षोडशीस्तोमः। अतिरात्रस्तोमः। इति चतुष्टोमो ज्योतिष्टोमः अग्निरित्यहः। अह्नां विभक्तौ रात्रिशब्दः। सोऽतिरात्रः। अहोरात्रयोः सन्धिर्द्वेधा—उक्थः षोडशी चेति। तत्र तदग्निष्टोमे निरूढानि सामान्युक्तानि।

( १६ ) अथ यान्यग्निष्टोमे निगूढानि सामानि तान्यतः परमुच्यन्ते । इलान्दं यज्ञा-यज्ञीयं वारवन्तीयमिति—सहाग्नीयानि । त्रिनिधनं हीदमिलान्दम् । समुद्रो वा एतच्छन्दः । अशीत्यक्षरस्य छन्दसः सिन्धुरिति संज्ञा । सिन्धु-समुद्रौ तुल्यार्थौ । इरान्नं तदिलान्दम् । ब्रह्मणो विभागे क्रियमाणे यदति-रिच्यते ब्रह्म तदिदं यज्ञायज्ञीयम् । वैश्वानराग्नेर्विभवनं यत्र वार्य्यते तद्वार-वन्तीयम् । अन्नं ब्रह्मपशव इति हीमानि सामानि ॥ १ ॥

( १७ ) प्राणोऽपानौ द्वौ व्रतपक्षौ प्रजापतेर्हृदयं वसिष्ठस्य निहवः इति षट् चित्याग्निसामानि ॥ २ ॥

( १८ ) सत्रस्य ऋद्धिराग्नीध्रीयाग्निसाम । श्लोकानुश्लोकौ हविर्धानसामनी । यामेति मार्जालीयाग्निसाम । आयुर्नवस्तोभौ सदसः सामनी । ऋष्यस्य सामेति शालामुखीयस्य गार्हपत्याग्नेः साम ॥ ३ ॥

( १९ ) गौरीवितं सुज्ञानमित्यसंस्थिते द्वे वाचः सामनी । गायत्री त्रिष्टुब् जगतीत्येवं वाचो विभागे क्रियमाणे यावती वागतिरिच्यते तद् गौरिवितम् । वाचोरसो गौरीवितम् । छन्दोगातिरिक्तास्त्वेतद् गौरिवीतमाहुः ॥ ४ ॥

( २० ) गौरीवितं श्यावाश्वं निहव इति त्रीण्यच्युतसामानि ॥ ५ ॥
प्लव इति गवामयनीयं साम । ओकोनिधनमिति षडहीयं साम ॥ ६ ॥

( २१ ) गायत्रम् । असहीयवम् । रौरवम् । यौधाजयम् । औशनम् । इति भिन्न दैवतानि पञ्चसामानि । तानि क्रमेण प्राणस्य प्रजापतेरग्नेरिन्द्रस्य वायोरिति विद्यात् । अपानव्यानप्राणाख्याः स्वरमयास्त्रैलोक्यप्राणा एवाप्रतीहारा गायत्रं साम ।

( २२ ) रथन्तरं वामदेव्यं नौधसमिति वा ; बृहद् वामदेव्यं श्यैतमिति वा वैवाहि-कानि सामानि । रथन्तरे गुणीभूतं यद् बृहत् तन्नौधसम् । बृहति गुणीभूतं रथन्तरं श्यैतम् । श्यैतं पशवः । नौधसं ब्रह्मवर्चसम् ।

( २३ ) त्रैककुभम् (१) । त्रैशोकम् (२) । आष्कारणिधनम् (३) । जनित्रम् (४) । आथर्वणम् (५) । अभीवर्तम् (६) । आयन्तीयम् (७) । इति सप्तब्रह्मसामानि । तानि क्रमेण पशुकामाय (१) शोकग्रस्ताय (२) प्रतिष्ठाकामाय (३) प्रजाकामाय (४) लोककामाय (५) भ्रातृव्य-वते (६) यज्ञविभ्रष्टाय (७) च कुर्य्यादित्यादेशः । अथ शत्रुबहिष्कारार्थं कालेयं सामोद्गीयते ॥

( २४ ) श्यावाश्वम् । आन्धीगवम् । कावम् । औशनम्—इति चत्वारि सामानि । वृष्टिपशुप्रभृतिकामैरुद्गेयानि । अथ कावं प्राजापत्यम् । औशनं वायव्यमिति विद्यात् । इत्यग्निष्टोमसामान्युक्तानि ॥ ॐ ॥

( २५ ) अथाष्टावुक्थसामानि । एकविंशस्तोमान्युक्थानि । तेषु च साकमश्वम् । सौभरम् । नार्मेधम् । इति त्रीणि प्रथमानि । तत्रेदं साकमश्वसामैन्द्रावारुणमैन्द्राबार्हस्पत्यमैन्द्रावैष्णवं चोपपद्यते । तेनोक्थाभिजयो भवति । पशवो वा उक्थानि । अथ बृहत्पृष्ठतेजः सौभरम् । तत् सार्वकामिकम् । नार्मेधं तु गातुविरसाम । तच्च घातुकजीवात् परित्राणहेतुः ।

( २६ ) अथ वारवन्तीयं वैश्वानराग्निवारणीयमित्युक्तम् ।

( २७ ) अथ हारिवर्णम्—उद्वंशीयम्—आष्टादंष्ट्रे द्विविधे इति चत्वार्युक्तमानि । तत्रेदं हारिवर्णं पशुकामाय रक्षोऽनुपक्ताय च कुर्य्यात् । अथ रथन्तरबृहद्वैरूपवैराजशक्करीरेवतीनां रूपेण पद्पृष्ठमिदमुद्वंशीयं भवति । तच्चासुरत्वं स्वर्गकामाय कुर्य्यात् । आष्टादंष्ट्रे तु ऋद्धिकामाय ॥

( २८ ) अथातिरात्रसामानि । वैतहव्यम् । ओकोनिधनम् । और्ध्वसद्मनम् । घृतश्च्युन्निधनम् । आश्विनम् । इत्येतानि पशुसामानि ॥

( २९ ) गौरीवितं काण्वं श्रौतकक्षं दैवोदासम् । इत्येतेषां साम्नां प्रथमं ब्रह्मसाम । द्वितीयमिन्द्रसांविद्यसाम । तृतीयं क्षत्रसामेति विद्यात् ।

( ३० ) आकूपारम् । आर्षभम् । गारम् । माधुच्छन्दसम् । दैवातिथम् । सौमेधम् । कौत्सम् । इति सप्तेन्द्रप्रीणनानि सामानि । तत्रार्षभं क्षत्रसाम । सौमेधं रात्रिपामेत्याहुः ॥

( ३१ ) अथ विप्रकीर्णसामानि । आद्वारं महावैष्टम्भमिति द्वे ब्रह्मसामनी ॥ आयास्यम् । सीदन्तीयम् । रौरवम् । और्णायवम् । वात्सप्रम् । मार्गीयवम् । भासः—इति साधारणसामानि ॥

( ३२ ) यौक्ताश्वम् (१) । वैखानसम् (२) । शार्करम् (३) । वात्सम् (४) । सौश्रवसम् (५) । वीङ्कम् (६) । इति कामसनिसामानि षट् ।

( ३३ ) सैन्धुक्षितं (१) । दैर्घश्रवसम् (२) । पार्थं काक्षीवतम्—इति देवराज्ञां सामानि ॥ दैवोदासं वाध्य्रश्वं वैतहव्यम्—इति मनुष्यराज्ञां सामानि ।

( ३४ ) इत्थं काम्यानि निगूढसामानि दर्शितानि । अथ लौकिकान्युदाह्रियन्ते ।

वृष्टौ तावत् पुरोवातो वहति । अथ मेघो जायते । अथ वर्षति । अथ विद्योतते स्तनयति । अथोद्गृह्णाति । इत्येताः पञ्चावस्थाः क्रमेण हिंकारादयः । साम्नः पञ्चभक्तयो द्रष्टव्याः ।। १ ।। अथ मेघः संप्लवते । अथ वर्षति । अथ प्राच्यः स्पन्दन्ते । अथ प्रतीच्यः । अथ समुद्र इत्येवमप्सु हिंकारादयः स्युः ।। २ ।। वसन्तो ग्रीष्मो वर्षाः शरद्धेमन्त इति ऋतवः पञ्चभक्तिकं साम ।। ३ ।। अजाः अवयो गावोऽश्वाः पुरुष इति पशवः सामः ।। ४ ।। प्राणो वाक् चक्षुः श्रोत्रं मन इति प्राणाः सामः ।। ५ ।।

( ३५ ) ये तु सप्तविधं सामोपासते तेषामुदाहरणानि यथा—यत्किञ्च वाचो हुमिति स हिंकारः । यत् प्रेति स प्रस्तावः । यदेति स आदिः । यदुदिति स उद्गीथः । यत्प्रतीति स प्रतीहारः । यदुपेति स उपद्रवः । यन्नीति स निधनम् ।। १ ।। इति ।।

आदित्ये यथा—यत्पुरोदयात् । यत्प्रथमोदिते । यत्संगववेलायाम् । यत्संप्रति मध्यन्दिने । यदूर्ध्वं मध्यन्दिनात्—प्रागपराह्णात् । यदूर्ध्वमपराह्णात्—प्रागस्तमयात् । यत् प्रथमास्तमिते—इति सप्तभक्तिकं साम ।। २ ।।

अथ हविर्यज्ञस्त्रेधा—इष्टिः पशुश्च पित्र्यं च । तत्रेष्टिः सप्तधा—अग्न्याधेयम्, अग्निहोत्रम्, दर्शपूर्णमासः, चातुर्मास्यम्, आग्रयणम्, इष्टचयनानि, काम्येष्टयश्च ।।

तत्राग्न्याधेयं पञ्चधा—अपूर्वाधानम्, अन्वाधानम्, पुनराधानम्, तृतीयाधानम्, विच्छिन्नाग्न्याधानं चेति । यत्रानाहिताग्निरग्निहोत्रादिहविर्यज्ञं कर्तुमग्नीन् प्रथममाधत्ते तदपूर्वाधानम् । अथ करिष्यमाणस्य कर्मणोऽनुकूलं यत् प्रथमं समिधामाधानमग्नौ क्रियते तदन्वाधानम् । अथ यस्य यजमानस्याधानकालादारभ्य संवत्सरादर्वाक् कस्यचित्पदार्थस्य हानिर्भवति, महारोगो वा जायते, अन्यानि वाऽग्न्यनुगत्यादीनि निमित्तानि भवन्ति स पुनर्वसुयुक्तायाममायां पुनरग्नीनाधत्ते तत् पुनराधानम् ।। पुनराधानानन्तरं संवत्सरादर्वागर्थनाशादिनिमित्तयोगादग्निनाशे पुनरप्यग्नीनाधत्ते तत् तृतीयाधानम् ।। एतच्च द्वितीयं पुनराधानं भवति ।। अथ सर्वाग्निनाशे समारूढारणीनाशे च विच्छिन्नसंधानार्थमग्नीनाधत्ते तद्विच्छिन्नाग्न्याधानम् ।। ० ।। एतत्सर्वं गार्हपत्याद्यग्नित्रयभेदात् प्रत्येकं त्रिधा भिन्नम् ।।

एवमाहितेऽग्नावन्या इष्टयो भवन्ति । तासां काश्चन वर्जयित्वा सर्वा दिनमाससंवत्सराद्यनुगता भवन्ति । तत्राग्निहोत्रमाह्निकेष्टिः । तस्याहोरात्रसन्धिभेदाद् द्वे पर्वणी भवतः सायमाहुतिश्च प्रातराहुतिश्च ।। १ ।। अथ दर्शपौर्णमासो मासिकेष्टिः । तस्य पक्षसन्धिभेदाद् द्वे पर्वणी भवतः—दर्शश्च पौर्णमासश्च ।। २ ।। अथ चातु-

मास्यं सांवत्सरिकेष्टिः । तस्य ऋतुसन्धिभेदाद् चत्वारि पर्वाणि भवन्ति । फाल्गुन्यां वैश्वदेवः । आषाढ्यां वरुणप्रघासः । कार्तिक्यां साकमेधाः । अथ फाल्गुन्या अर्वाक् शुनासीर्य्येष्टिरिति ॥ त्र्यम्बकयागः पित्र्येष्टिः, पिण्डपितृयज्ञश्च तस्यैव धर्म्मा भवन्ति ॥ ३ ॥ संवत्सरस्य ऋतुत्रयं द्वेधा व्यवतिष्ठते—अग्नितारतम्याच्च सस्योत्पत्ति विशेषाच्च । तत्र घर्मकालः, वर्षाकालः, शीतकालः—इत्यग्निपर्वाणि । तद्वैशेष्या चातुर्मास्यपर्वाण्युक्तानि ॥ अथ संवत्सरविभागत्रयेण श्यामाकव्रीहियवा नवसस्या उत्पद्यन्ते । तद्वैशेष्यादपराणि त्रीणि संवत्सरपर्वाणि भवन्ति । तान्याग्रयणपदेनो-च्यन्ते । नवसस्येष्टिराग्रयणम् । तत्र श्यामाकाग्रयणकालो वर्षाः । व्रीह्याग्रयणकालः शरत् । यवाग्रयणकालो वसन्तः ॥ वेणुयवाग्रयणकालोऽपि वसन्तः । वेणु-यवा वंशफलानि । वैणुयवीष्टिरनित्या । अन्यास्त्वाहिताग्नेर्नित्या । अन्येषां नित्यकाम्याः ॥

अथेष्ट्ययनकर्म्माणि । अयनमिष्ट्ययनमित्येकार्थौ । "कस्मादयनानीति । गम-नान्येतानि भवन्ति कामस्य कामस्य स्वर्गस्य च लोकस्य" इति कौषीतकीयश्रुतेः सर्व-कामसाधनकर्म्मविशेषेष्वयनशब्दो योगरूढः । द्विविधान्ययनानि श्रूयन्ते—ऐष्टि-कानि, सत्रविशेषाश्च । तेषु सत्रव्यावृत्त्यर्थमिष्टिशब्दः प्रयुज्यते । इष्ट्ययनानीति । इष्टयश्चेता, अयनानि चैतानि । यद्वा—केवलेनेष्टिशब्देन दर्शपूर्णमासप्रतिपत्तिरिति याज्ञिकसंप्रदायः । ततः समानतन्त्रतया दर्शपूर्णमासं गतानि कर्म्माण्येवेष्ट्ययनानि । एता हीष्टयो दर्शेष्टितन्त्रेण वा पौर्णमासेष्टितन्त्रेण वा कर्तव्यास्तद्विकारसिद्धा भवन्ति ॥ ताश्च कामनाविध्यपचारादिनिमित्तानन्त्यादसंख्येया इष्यन्ते । "न चेष्टयः पृथक्त्वतः शक्याः परिसंख्यातुम्" इति शांखायनोक्तेः । अथापि यावत्यो ब्राह्मणेषु कल्पेषु चोपदिष्टाः, तासां काश्चिन्निर्दिश्यन्ते । ताश्च पञ्चधा विभज्यन्ते—
(१) अनुनिर्वाप्या । (२) अदीक्षितायनानि । (३) प्रायश्चित्तीयाः । (४) क्रत्वर्थिक्यः । (५) काम्याश्चेति ॥ तत्र विमृद्वती, वैमृधेष्टिः, वैमध्येति वा, याऽख्यायते सैका अनुनिर्वाप्या । सा नित्या ।

शांखायनः प्राह—पौर्णमास्यां पूर्णमासकर्मणि समाप्तेऽमावास्याविकारेण यागे-नेन्द्राय विमृधे एकादशकपालं पुरोडाशं निर्वपति । अमावास्यायां त्वामावास्यकर्म्मणि समाप्ते पौर्णमासीविकारेण यागेनादितिं यजते साऽनुनिर्वपनादनुनिर्वाप्या नामेष्टिः अनया द्विषतो भ्रातृव्यानपहन्ति । ते एते इष्टी दर्शपूर्णमासयोः संस्थानमनुसृत्यैव विधीयेते इत्यतस्ते अपि दर्शपूर्णमासवद् यावदायुषं कार्य्ये त्रिंशतं वर्षाणि वा ॥ ० ॥

१ २ ३ ४ ५
अथ दाक्षायणयज्ञः । इडादधः । सार्वसेनियज्ञः । वसिष्ठयज्ञः । शौनकयज्ञः ।
६ ७ ८
साकं प्रस्थाय्यः । मुन्ययनं । तुरायणम्—इत्यष्टावदीक्षितायनानि ॥ तत्र पुरा दक्षः पार्वतिरेतेन यज्ञेनेयाज । तस्मादयं दाक्षायणो नाम यज्ञः । अत्र पौर्णमास्यमामावास्यं चेति
१ २
यागद्वयम् । तत्र पौर्णमास्ये—आग्नेयः पुरोडाशः, अग्नीषोमीयमुपांशुयाजमाज्यम,
३
अग्नीषोमीयः पुरोडाशः—इति त्रीणि पूर्वेद्युर्हवींषि । अग्नीषोमीयः पुरोडाश एव वा
१ २
हविरेकं पूर्वेद्युः पौर्णमास्यां भवति न परेद्युस्तु—आग्नेयः पुरोडाशः, ऐन्द्रं च सांनाय्यम् ॥
१ २ ३
अथ दर्शे—आग्नेयः पुरोडाशः ॥ वैष्णवमुपांशुयाजमाज्यम् । ऐन्द्रं सांनाय्यम्—इति त्रीणि हवींषि पूर्वेद्युः । अथवा ऐन्द्राग्नः पुरोडाश एवामावास्यायां पूर्वेद्युः । परे-
१ २
द्युस्तु—आग्नेयः पुरोडाशः, मैत्रावरुणी पयस्या च भवति ॥ अयं च फाल्गुन्यामारभ्य यावदायुषं कार्य्यः पञ्चदशवर्षाणि वा । संवत्सरं वा ॥ काम्यस्तु संवत्सरमेव कार्य्यः ॥ एनमप्येके वसिष्ठयज्ञ इत्याचक्षते—इत्याह भगवान् याज्ञवल्क्यः ॥ १ ॥

अथेडादधः स प्राजापत्ययज्ञः पशुकामस्यान्नाद्यकामस्य च विधीयते । तत्र पौर्ण-
१ २ ३ ४
मास्याम् आग्नेयः पुरोडाशः, सरस्वत्यै चरुः, अग्नीषोमीयः पुरोडाशश्चोपांशुयाजश्च ।
५ १ २ ३
ऐन्द्रं सांनाय्यं च । दर्शे तु—आग्नेयः पुरोडाशः । सरस्वत्यै चरुः । ऐन्द्राग्नेयः पुरो-
४
डाशः । मैत्रावरुणी पयस्या च । फाल्गुन्यामारभ्य यावदायुषं कार्य्यः । संवत्सरं वा । काम्यस्तु संवत्सरमेव ॥ २ ॥

अथ यत्र पौर्णमास्यामेव पौर्णमास्यानि हवींषि पूर्वाणि कृत्वा पश्चादामावास्यान्यपि हवींषि क्रियन्ते न पृथगमावास्यायां स सार्वसेनियज्ञः । प्रजातिकामस्य यज्ञोऽयम् । फाल्गुन्यामारभ्य संवत्सरं कार्य्यः ॥ एनमप्येके वसिष्ठयज्ञ इत्याचक्षते ॥ ३ ॥

यत्र तु अमावास्यायामेवामावास्यानि पूर्वाणि कृत्वा पश्चात् पौर्णमास्यान्यपि हवींषि क्रियन्ते न पृथक् पौर्णमासीं यजते स वसिष्ठयज्ञः । अनेन प्रजावान् पशुमांश्च भवति । द्विषतो भ्रातृव्यांश्चाभिभवति ॥ फाल्गुनस्यामावास्यायामारभ्य संवत्सरं कार्य्यः ॥ ४ ॥

अथ शौनकयज्ञस्तु स्तूर्यमाणस्य भवति, य इच्छेद्—छिन्नं भ्रातृव्यं स्तृण्वीयेति सोऽनेनेष्ट्वा स्तृणुते । सार्वसेनियज्ञवदयं फाल्गुन्यामारभ्य संवत्सरं कार्य्यः ॥ ५ ॥

अथ यत्र साकं संप्रतिष्ठन्ते, साकं संप्रयजन्ते, साकं भक्षयन्ते—स साकं प्रस्थाय्यो नाम । श्रैष्ठ्यकामस्य पौरुषकामस्य चायं यज्ञः । वसिष्ठयज्ञवदयं फाल्गुन्याममावास्यायामारभ्य संवत्सरं कार्य्यः ॥ ६ ॥ एतानि षड् दीक्षितायनानि । दर्शपूर्णमासायनानीति शांखायनः । पर्वण्येवैषां कर्तव्यतानियमात् । काम्यानि चैतानि । काम्यानामकरणे प्रत्यवायाभावः ॥

अथ यदि पर्वदिनादन्यत्र दिनेषु पौर्णमासीविकारेण यागेन सदा यजते तन्मुन्ययनम् । तत्र पञ्चदश सामिधेन्यः । आग्नेयश्चाग्नावैष्णवश्च पुरोडाशः । सर्वकामस्य यज्ञोऽयं फाल्गुन्यामारभ्य यावदायुषं कार्य्यः । संवत्सरं वा ॥ ७ ॥

यत्र तु पर्वदिनादन्यत्र दिनेषु अमावास्याविकारेण यागेन सदा यजते तत्तुरायणम् । तत्राग्नेयः[1], ऐन्द्रः[2], वैश्वदेवश्चेति[3] त्रयो यागाः । अदीक्षितः कृष्णाजिनं प्रतिमुञ्चते । स्वर्गकामस्य यज्ञोऽयं फाल्गुन्यामारभ्य यावदायुषं कार्य्यः संवत्सरं वा ॥ ८ ॥ एते द्वे अदीक्षितायते अपवर्गायणे काम्ये चेति दिक् ॥ ० ॥ तान्येतान्यष्टौ दर्शपूर्णमासविकारभूतान्यदीक्षितायनानि नाम ॥ एषामन्यतमं कुर्वाणस्य यावदेतत्संस्थं दर्शपूर्णमासौ नित्यावपि निवर्त्तेते ॥ तत्प्रतिस्थाने एवैषां काम्यत्वेन विधानात् । कौण्डपायनीयौ तु भवत एव ॥ इत्यदीक्षितायनानि ॥ इत्येताः पौरुषार्थिक्य इष्टयः ॥

अथ शांखायनीये प्रायश्चित्तीयाः काश्चिदुपदर्शिताः ॥ तथा हि—अभ्युदिता,[1] अभ्युद्दृष्टा[2] चेति द्वे अन्ये ॥ अग्निमदग्नीष्टिः[1] । पथिकृदग्नीष्टिः[2] । वीत्यग्नीष्टिः[3] ॥ विविच्यग्नीष्टिः[4] । संवर्गाग्नीष्टिः[5] । शुच्यग्नीष्टिः[6] । अप्सुमदग्नीष्टिः[7] । इति सप्तान्याः ॥ रुद्रेष्टिः[1] । पथिकृत् पूषेष्टिः[2] । सार्वकामिकीष्टिः[3] । व्रतपत्यग्नीष्टिः[4] । व्रतभृदग्नीष्टिः[5] क्षामवदग्नीष्टिः[6] । मारुतेष्टिश्चेति[7] च सप्तान्याः ॥ वैश्वानरीष्टिः[1] । सारस्वतीष्टिः[2] । सुमत्यग्नीष्टिः[3] । प्रातरिष्टिः[4] । वारुणीष्टिश्चेति[5] पञ्चान्याः । एवमादयो बह्व्यो बहुविधाश्च प्रायश्चित्तीयाः इष्टयः ॥ यस्योपवसथे पुरस्ताच्चन्द्रो दृश्यते स यज्ञपथादपैति॥

अतएव भ्रान्तिवशादनागते पर्वणि यस्याममावास्यं प्रक्रान्तं तेनेयमभ्युदितेष्टिः क्रियते। स एतया यज्ञपथमेत्य यथाविहिते काले पुनरामावास्यं करोति ॥ अत्रेष्टौ त्रीणि हवींषि—अग्नये[1] दात्रेऽष्टाकपालः पुरोडाशः । इन्द्राय[2] प्रदात्रे सायं दोहितं दधि । विष्णवे[3] तु शिपिविष्टाय प्रातर्दोहिते पयसि चरुः । सोऽयं दर्शविकारः ॥ १ ॥ अथ यस्योपवसथे पश्चाच्चन्द्रो दृश्यते सोऽपि यज्ञपथादपैति । अतएव भ्रान्तिवशादतीते पर्वणि यस्याममावास्यं प्रक्रान्तं तेनेयमभ्युदृष्टेष्टिः क्रियते ॥ स एतया यज्ञपथमेत्य तस्मिन्नेवाहन्यामावास्यं करोति ॥ शतपथे तु—"स आमावास्येन विधिनेवेष्ट्वा अथेष्टिमनुनिर्वपति । तदहर्वा श्वो वा"—इत्येवमिष्टेः प्रागपि दर्शेष्टिरभ्यनुज्ञायते । अभ्युदितावदभ्युदृष्टापि दर्शेष्टिकालव्युत्क्रमनिमित्ता प्रायश्चित्तीया ॥ इयमपि दर्शविकृतिः ॥

अथ शांखायनः प्राह । यदि पूर्वोद्धृतेऽग्नौ सत्यन्योऽग्निरभ्युद्ध्रियते तर्हि विध्यपराधप्रायश्चित्तायाग्निमतेऽग्नये इष्टिं कुर्य्यात् । साग्निमदग्नीष्टिः ॥ १ ॥ यदि विहृतानग्नीनन्तरेण शकटादिकं चक्रीवन्निर्गच्छेत् । नियतकालानां वा दर्शपूर्णमासादीनामतिपत्तिः स्यात् । तदा तद्दोषशमनाय पथिकृतेऽग्नयेऽष्टाकपालं पुरोडाशं निर्वपेत् ॥ २ ॥ अनपवृत्तकर्मणामग्नीनां द्वयोरनेकेषां वा मिथः संसर्गे सति तत्प्रायश्चित्ताय वीतयेऽग्नये यागः । सा वीत्यग्नीष्टिः ॥ ३ ॥ ग्राम्येण लौकिकेनासंस्कृतेनाग्निना संस्कृतानामग्नीनां संसर्गे तद्दोषशमनाय विविचयेऽग्नये यागः । सा विविच्यग्नीष्टिः ॥ ४ ॥ अरण्ये घोरं प्रदहन्नग्निर्यदि ग्राममागतः स्यात् स प्रदाव्य इत्युच्यते । तेन सह संस्कृताग्नीनां विहृतानां संसर्गे सति प्रायश्चित्तायाग्नये संवर्गायेष्टिः क्रियते सा संवर्गेष्टिः ॥ ५ ॥ क्रव्येण शवाग्निना तेषां संसर्गे शुचयेऽग्नये यागः । सा शुच्यग्नीष्टिः ॥ ६ ॥ वैद्युतेनाग्निना संस्कृताग्निसंसर्गेऽप्सुमतेऽग्नये यागः । साऽप्सुमदग्नीष्टिः ॥ ७ ॥ सप्तैताः अग्निदोषप्रायश्चित्तीयाः ॥ ० ॥

अथ स्वजनविषये व्याधिप्राचुर्य्ये सति रुद्रायेष्टिं कुर्य्यात् ॥ १ ॥ महान्तमध्वानं गमिष्यन् पूष्णे पथिकृते यजेत ॥ २ ॥ सर्वकामसिद्ध्यर्थमग्नये कामाय यजेत ॥ ३ ॥ व्रत्यवेलायां यदि सकलं व्रत्यमहः प्रवासेनातिपतेत् । अत्रत्यं वा मैथुनमांसभोजनादि चरेत् तदाऽग्नये व्रतपतये व्रातपतीष्टिः कार्य्या ॥ ४ ॥ व्रत्यवेलायाममात्यश्रु पातयित्वा व्रतभृतेऽग्नये इष्टिं कुर्य्यात् ॥ ५ ॥ गृहदाहे सति तत्प्रायश्चित्ताय क्षामवतेऽग्नये इष्टिं कुर्य्यात् ॥ ६ ॥ द्वयोः सरूपयोर्यमलजनने असरूपयोर्जनने, बहूनां यमलजनने वा, मरुद्भ्य इष्टिं कुर्य्यात् ॥ ७ ॥ सप्तैता विप्रकीर्णदोषप्रायश्चित्तीयाः ॥

१ अथ सुमत्यग्नीष्टिः २ अथ प्रातरीष्टिः ३ अथ वारुणीष्टिः

"वैश्वानरीं व्रातपतीं पवित्रेष्टिं तथैव च ॥

ऋतावृतौ प्रयुञ्जानः पुनाति दशपौरुषम्" ॥ १ ॥

"कृतानां पशुसोमानां निष्कृत्यर्थमसंभवे ॥

इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्य्यये ॥" २ ॥

इत्येवमादयः प्रायश्चित्तीया द्रष्टव्याः ॥ अग्निहोत्रापचारे च बह्व्यः प्रायश्चित्तीष्टयः शतपथे व्याख्याताः ॥ प्रायश्चित्तीयाः पौरुषार्थिक्यश्च भवन्ति क्रात्वर्थिक्यश्च । येषां यागानामकरणे प्रत्यवायः प्राप्नोति तेषां विध्यपचारप्रायश्चित्तय उभयार्था भवन्ति । काम्यानां विध्यपचारे प्रायश्चित्तयः क्रत्वर्था एव ॥ ० ॥ अथ अपराः काश्चन क्रात्वर्थिक्यो भवन्ति । तत्तत्क्रतुसिद्धये प्रयुज्यमानास्ता यज्ञधर्मा इष्यन्ते । यथा [१] दीक्षणीयेष्टिः, [२] आतिथ्येष्टिः, [३] उपसदिष्टिरित्यादयो ज्योतिष्टोमधर्माः । [१] प्रायणीयेष्टि[२]रुदयनीयेष्टिरित्यादयः सत्रधर्माः । [१] अवभृथेष्टिः । [२] अनकिवतीष्टिः । [३] सांतपनेष्टिः । [४] क्रीडीयेष्टिः । [५] पित्र्येष्टिः । [६] आदित्येष्टिः । [७] सवनेष्टिरित्यादयश्चातुर्मास्यधर्माः । उखासंभरणीयेष्टिरित्यादयश्चयनधर्माः ॥ एवमुदवसानीयेष्ट्यादयोऽन्यान्या अपि बह्व्य इष्टयो यज्ञार्थास्तत्रतत्रानुसन्धेयाः इति दिक् ॥ ० ॥ ० ॥ इति क्रात्वर्थिकेष्टयः ॥

अथ काम्याः ।

[१] द्यावापृथिव्ययनम्, [२] मित्रविन्दा, [३] संज्ञानी, [४] द्वितीया संज्ञानी, [५] ऐन्द्रामारुती, [६] ऐन्द्राबार्हस्पत्या, [७] स्नुषाश्वश्रुरीया, [८] पवित्रेष्टिः, [९] स्वस्त्ययनीया, [१०] जीवातुमती, [११] पुत्रकामिका, [१२] पुष्टिकामिका, [१३] प्रजाकामेष्टिः, [१४] इन्द्रियवीर्य्यप्रतिष्ठाकामेष्टिः, [१५] अनुनिर्वापपौष्णेष्टिः, [१६] चैत्रपत्येष्टिः, [१७] राक्षोघ्नेष्टिः, [१८] सुरभिमदीष्टिः, [१९] क्षामवदीष्टिः, [२०] कामेष्टिः, [२१] आयुःकामेष्टिः, [२२] भूतिकामेष्टिः, द्वितीया [२३] भूतिकामेष्टिः, [२४] रुक्कामेष्टिः, [२५] तेजस्कामेष्टिः, [२६] अन्नकामेष्टिः, [२७] अन्नाद्यकामेष्टिः, [२८] अन्नपतित्वकामेष्टिः, [२९] चिररोगमुक्तिकामेष्टिः, [३०] चक्षुःकामेष्टिः द्वितीया [३१] चक्षुःकामेष्टिः, [३२] पुत्रकामेष्टिः, [३३] रसकामेष्टिः, [३४] वसुकामेष्टिः, [३५] अभिशापनिवृत्तीष्टिः

३६ ग्रामकामेष्टिः, ३७ द्वितीया ग्रामकामेष्टिः, ३८ भिद्यमाणद्रव्यप्राप्तिकामेष्टिः, ३९ पशुकामेष्टिः, ४० द्वितीया पशुकामेष्टिः, ४१ ब्रह्मवर्चसकामेष्टिः, ४२ ब्रह्मवर्चसकामेष्टिः, ४३ अन्नकामेष्टिः, ४४ पापक्षयकामेष्टिः, ४५ बन्धादिमोक्षकामेष्टिः, ४६ महायज्ञकामेष्टिः, ४७ दत्तद्रव्यप्राप्तिकामेष्टिः, ४८ अधिकश्रीकामेष्टिः, ४९ यज्ञकामेष्टिः, ५० दुश्चर्म्मत्वाभावेष्टिः, ५१ शतकृष्णलेष्टिः, ५२ हिरण्यलाभकामेष्टिः, ५३ लब्धहिरण्येष्टिः, ५४ पुंस्त्वकामेष्टिः, ५५ लोकेष्टिः, ५६ आशापालेष्टिः, ५७ कारीरी, ५८ पिण्डीयागः, इत्यष्टापञ्चाशत् ॥ एवमादयोन्या अपि बह्व्यः काम्या इष्टयः ॥

मित्रलब्धिकामोऽग्निं १ सोमं २ वरुणं ३ मित्रमिन्द्रं ४ ५ बृहस्पतिं ६ सवितारं ७ पूषणं ८ सरस्वतीं ९ त्वष्टारमित्येतादश १० देवता यजति । सैषा मित्रविन्दा नामेष्टिः । इयमेव महावैराजी नाम ॥ २ ॥

ज्ञातयः—सपिण्डाः सनाभयो वा ॥ ते वा स्वामिभृत्या वा परस्परमसंविदानाः कार्य्येषु विभिन्नमतयः सन्तो यदि संमतिकामाः स्युस्तदा संज्ञानीमिष्टिं निर्वपेरन् सैषा संज्ञानी बहुदेवता चोच्यते ।तत्राग्निर्वसुमान्, सोमो रुद्रवान्, इन्द्रो मरुत्वान्, वरुण आदित्यवान्,—इत्येतासां सगुणानां चतसृणां देवतानामेकं प्रदानम् । तत्र ज्ञातयः—संज्ञानमुशनावदद्—इति सूक्तं जपेयुः । समाने श्रैष्ठ्यमिच्छतश्चेयमिष्टिः ॥ ३ ॥ राजविशोरसंपत्तिकामानामाहिताग्नीनां च प्रकृत्यैव संज्ञानीष्टिः १ ( आश्व. ) ॥ ४ ॥ एवमेव भेदकामानामियमैन्द्रामारुतीष्टिः क्रियते । तत्र मारुतयागादूर्ध्वमैन्द्रो यागः । स्नुषाश्वसुरीया नामेष्टिराभिचीरिकी क्रियते ॥ तत्र केवल इन्द्रो वा इन्द्रः सुरो वा देवता ॥ ५ ॥ अथ शत्रुभिः प्रधृष्यमाणानामियमैन्द्राबार्हस्पत्या नामेष्टिः । तत्र बार्हस्पत्यं निरूप्य इन्द्राय नोदयेयुः ॥ ६ ॥ संवत्सरमतिप्रवसतः शुद्धिकामस्य पवित्रेष्टिः । तत्र पावकवत्यौ धाय्ये ॥ ७ ॥ अथ स्वस्त्ययनीयेष्टिः, रक्षितवती चेयमुच्यते । तत्राग्निश्च सोमश्चेत्येतौ रक्षितवन्तौ देवता ॥ ८ ॥ यत्र त्वायुष्कामेनाग्निरिन्द्रश्चेति द्वे जीवातुमत्यौ देवते इज्येते सा जीवातुमती । सैवायुः कामेष्टिरप्युच्यते । तत्राग्नेरायुष्मत्त्वमिन्द्रस्य च त्रातृत्वं गुणः ॥ ९ ॥ पुत्रकामेष्टावग्निः पुत्रवती देवता इयमेव पुत्रवतीष्टिः ॥ १० ॥ पुष्टिकामेष्टाविन्द्रो दाता देवता ॥ ११ ॥ अथ प्रजाकामेष्टिः सद्यस्काला चोच्यते । ऐन्द्राग्नो व्रीहिमय एकादशकपालः पुरोडाशः । सप्त-

देश सामधेन्यः । पौर्णमासतन्त्रम ॥ १२ ॥ अथ धर्मसभायां व्यवहारादिभाषणार्थे-न्द्रियवीर्य्यप्रतिष्ठार्थमिष्टिः क्रियते, प्रजाकामेष्टिवत्॥ १३ ॥ इन्द्रियवीर्य्यप्राप्त्यर्थ-मिमामिष्टिं कृत्वा यत्र पौष्णं चरुमनुनिर्वपति साऽनुनिर्वापपौष्णेष्टिः ॥ १४ ॥ अथ जनसमूहं प्राप्तः प्रतिष्ठार्थं चैत्रपत्यं चरुं निर्वपति सा चैत्रपत्येष्टिः ॥ १५ ॥ रक्षोगणपीडानिवृत्त्यर्थममावास्यायां महारात्रेऽग्नये रक्षोघ्नेऽष्टाकपालः पुरोडाशः । सा राक्षोघ्नेष्टिः ॥ १६ ॥ गोमरणनिवृत्त्यर्थं पुरुषमरणनिवृत्त्यर्थं भयनिवृत्त्यर्थं पूतिगन्धनिवृत्त्यर्थं चाग्नये सुरभिमतेऽष्टाकपालः सा सुरभिमतेष्टिः ॥ १७ ॥ शेष-जातिमृत्युनिवृत्त्यर्थमग्नये क्षामवतेऽष्टाकपालः । गृहदाहनिवृत्तयेऽपि स क्षामवती-ष्टिः ॥ १८ ॥ प्रतिबन्धकनिवृत्त्या काम्यकर्मफलसिद्ध्यर्थमग्नये कामायेष्टिः ॥ १६ ॥ सर्वायुःसिद्ध्यर्थमग्नये आयुष्मतेऽष्टाकपालः इन्द्राय त्रात्रे एकादशकपालः । इयमेव जीवातुमतीष्टिः ॥ २० ॥ भूतिकामोऽग्नये जातवेदसेऽष्टाकपालं निर्वपति सा भूति-कामेष्टिः ॥ २१ ॥ रुचे कामयमानोऽग्नये रुक्मवतेऽष्टाकपालं निर्वपति रुक्-कामेष्टिः ॥ २२ ॥ तेजस्कामोऽग्नये तेजस्वते ॥ २३ ॥ अन्नकामोऽग्नयेऽन्नवते ॥ २४ ॥ अन्नाद्यकामोऽग्नयेऽन्नादाय ॥ २५ ॥ अन्नपतित्वकामोऽग्नयेऽन्नपतये ॥ २६ ॥ दीर्घरोगमुक्त्यर्थमग्नये पवमानाय, अग्नये पावकाय, अग्नये शुचये चाष्टाकपालाः पुरोडाशाः ॥ २७ ॥ चक्षुःकामोऽपि पूर्ववत् करोति ॥ २८ ॥ पुत्रकामस्याग्नये पुत्रवतेऽष्टाकपालः । इन्द्राय पुत्रिणेऽष्टाकपालः ॥ २६ ॥ रसकामस्य त्वग्नये रसवते-ऽजक्षीरे चरुः । अत्र पयसः प्रणयनं नापाम् ॥ ३० ॥ वसुकामस्याग्नये वसुमतेष्टाक-पालः ॥ ३१ ॥ पतितत्वेन जनैरभिशस्यमानस्य वैश्वानराय द्वादशकपालः । वरुणाय चरुः । दधिक्राव्णश्चरुः ॥ ३२ ॥ ग्रामकामस्याग्नये वैश्वानराय द्वादशकपालः मरुद्भ्यः सप्तकपालः ॥ ३३ ॥ भिक्ष्यमाणद्रव्यप्राप्तिकामस्याग्नये वैश्वानराय द्वादशकपालः । भिक्षितद्रव्यप्राप्तौ प्रतिष्ठाकामो वैश्वानर्य्या यजते ॥ ३४ ॥ पशुकामस्यैन्द्रश्चरुः ॥ ३५ ॥ अथवा पशुकामस्येन्द्रायेन्द्रियावते एकादशकपालः सा द्वितीया पशुकामेष्टिः ॥ ३६ ॥ ब्रह्मवर्चसकामस्य इन्द्राय घर्मवते एकादश-कपालः ॥ ३७ ॥ अन्नकामस्येन्द्रायार्कवते एकादशकपालः ॥ ३८ ॥ भूतिकामस्ये-न्द्राय धर्मवते एकादशकपालः ॥ ३६ ॥ पापक्षयकामस्येन्द्रायांहोमुचे एकादश-कपालः ॥ ४० ॥ बद्धो वा शत्रुवेष्टितो वा तन्मोक्षार्थमिन्द्राय त्रात्रे एकादशकपालं निर्वपति ॥ ४१ ॥ महायज्ञान् वाजपेयादीन् कर्तुमशक्तस्येन्द्रायार्काश्वमेधवते एकादश-कपालः ॥ ४२ ॥ ग्रामकामस्येन्द्रायानृजवे एकादशकपालः सा द्वितीयेष्टिः ॥ ४३ ॥ दत्तद्रव्यप्राप्तिकामस्येन्द्राय प्रदात्रे एकादशकपालः ॥ ४४ ॥ तुल्येभ्योऽधिकश्रीकाम-स्येन्द्रायैकादशकपालः ॥ ४५ ॥ साधारणज्योतिष्टोमादियज्ञकामस्याग्नावैष्णव

एकादशकपालः ॥ ४६ ॥ अथ ब्रह्मवर्चसकामस्य द्वितीयेष्टिः । पौष्यामग्निहोत्रानन्तरं सोमारुद्राभ्यां चरुः ॥ ४७ ॥ भाविदुश्चर्मत्वाभावकामस्य सोमापौष्णश्चरुः ॥ ४८ ॥ यो मृत्योर्बिभेति स पूर्णायुःप्राप्त्यर्थं प्रजापतये हिरण्यनिर्मितगुञ्जाप्रमाणशतकृष्णलमयं चरु निर्वपति सा शतकृष्णलेष्टिः ॥ ४९ ॥ हिरण्यलाभकामस्याग्नेयोऽष्टाकपालः, सावित्रो द्वादशकपालः, भूम्यै चरुः, ॥ ५० ॥ हिरण्यलाभे जाते तत्प्रतिष्ठार्थं पुनस्तयैवेष्ट्या यजते सा लब्धहिरण्येष्टिः ॥ ५१ ॥ क्लीवत्वनाशपूर्वकपुंस्त्वकामस्य सोमाय वाजिने श्यामाकश्चरुः ॥ ५२ ॥ चक्षुःकामस्याग्नये भ्राजस्वतेऽष्टाकपालः । सौर्य्यश्चरुः सैषा द्वितीया चक्षुःकामेष्टिः ॥ ५३ ॥ अथ लोककामस्य पृथिव्यन्तरिक्षदैवत्येष्टिः । सा लोकेष्टिः ॥ ५४ ॥ एवमाशापालेष्टिः ॥ ५५ ॥ अथ वृष्टिकामेन कारीरीष्टिः कार्य्या । सा चाग्न्यादिनानादेवताकाऽग्निदेवनाका वा ॥ ५६ ॥ वर्षकामेष्टिमात्रेऽनुमन्त्रौ गायत्रौ देवते । अग्निः सोमो वा । अथवा धामच्छद्गुणकोऽग्निः । ता एतास्तिस्रो मरुद्देवत्या इष्टयः पिण्डीसंज्ञाः । संस्थितायामिष्टौ सर्वासां दिशामुपासनं च कार्य्यम् ॥ ५७ ॥ एवमादयः काम्या आश्वलायनीयापस्तम्बीयबौधायनीयादिश्रौतग्रन्थेषु ब्राह्मणग्रन्थेषु च तत्र तत्र समाख्याताः ॥ एताश्च दर्शेष्टिविकारा वा पौर्णमासविकारा वेति तत्र तत्रोपेक्ष्यम् ॥ ० ॥ काम्यानां चादीक्षितायनवदिष्ट्ययनत्वाविशेषेऽपि भूयसा याज्ञिकैः पार्थक्येन व्यवह्रियमाणत्वात् तदनुरोधेन ब्राह्मणवसिष्ठन्यायेनेहापि तासां पृथगुपदेशः ॥

यासां काम्यानां कालविशेषो नोपदिष्टस्तासां पर्वणि शुक्लपक्षे देवनक्षत्रे प्रयोगः नैमित्तिकेष्टीनां तु निमित्तानन्तरमेव काम्यानां प्रयोगे दर्शपूर्णमासौ न निवर्त्तते । आहिताग्निर्दर्शेष्ट्या पौर्णमासेष्ट्या वा नित्येष्ट्या सम्यगिष्ट्वा ततोऽभीष्टां काम्यामिष्टिं यष्टुमीष्टे ॥ काम्या इष्टीः करिष्यमाणो यजमानः पूर्वं संवत्सरपर्य्यन्तं द्वादशाहं वा जयादिभिः पूतः पयोव्रती ब्रह्मचारी च भूत्वा काम्यास्वधिकारी भवति । ऋत्विजोऽपि पयोव्रतरहितानेतान्नियमान् धारयेयुः । काम्येष्टियजनशीला इष्टियाजूका उच्यन्ते ॥ ० ॥

इति ऐष्टिकयज्ञा आख्याताः ।

अथ पशुः । पशुरिति पशुबन्ध इति च तुल्यो व्यवहारः । स चतुर्धा—निरूढपशुबन्धः, अग्नीषोमीयपशुबन्धः, सौत्रामणीपशुबन्धः, चयनपशुबन्धश्चेति ।। प्रकारान्तरेण पशुबन्धो द्वेधा—हविर्यज्ञविधः सवविधश्च । तत्र यस्मिन् व्रतमुपैति, अपःप्रणयति, पूर्णपात्रं निनयति, विष्णुक्रमान् क्रमति, यत्र चाज्यभागौ भवतः स हविर्यज्ञविधः । स निरूढपशुबन्धः ।। अथ यत्रैतानि न क्रियन्ते स सवविधः । सोऽग्नीषोमीयः, स सौत्रामणी पशुः ।। अत्र पुनः प्रकारान्तरेण स पशुबन्धो द्वेधा । पुरुषार्थः क्रत्वर्थश्च । तत्राद्यः स्वतन्त्रो विधीयते निरूढपशुबन्धो नाम ।। होता, अध्वर्युः उद्गाता, ब्रह्मा, प्रतिप्रस्थाता प्रशास्ता इति षडत्र ऋत्विजो भवन्ति ।। प्राकृतवेदिवत् पाशुकवेदिश्च । यूपसंपादनं च । पशुरत्र छाग एव जातदन्तः स्यादव्यङ्गः । अथ एकशृङ्गः छिन्नकर्णोऽन्धो भग्नदन्तो वामनश्छिन्नपुच्छः शिपिविष्टो वधिरः कच्छनियुक्त एकखुरश्च पशुरत्र प्रतिषिद्धः । बर्हिषि प्रतीचीनशिरसमुदीचीनपादं पशुं शाययित्वा शमितारः संज्ञपयन्ति । पशोर्मारणं संज्ञपनम् । संज्ञप्यमानं यजमानादयो नावेक्षन्ते । ततो वपोत्खेदनम् । सर्वोदरव्यापी पोलिकाकारोऽतिश्वेतो वपा । शामित्रशालायां शामित्रेऽग्नौ पशुकुम्भ्यां पशुपाकः ।। वपा, पशुपुरोडाशःहवींपि । पश्वङ्गयागः । वनस्पतियागः । उपयाजः । पाशुकाग्नेयेष्टिः । पाशुकाग्नावैष्णवेष्टिः । प्रयाजाः । अनुयाजाः । इत्येवमादीन्यत्र कर्म्माणि भवन्ति ।। सोऽयं सद्यस्कालपशुप्रकारः ।। तस्य चोत्तरायणं शुक्लपक्षो देवनक्षत्रं रेवती वाऽमावास्या यजनीयदिनं वाऽनुष्ठानकालः ।। दर्शपौर्णमासयागकालो यजनीयदिनमुच्यते ।। अथाक्तं मानवे श्रौतसूत्रे—"षट्सु षट्सु मासेषु पशुना यजेत, संवत्सरे संवत्सरे वा ।। नैनमनीजानं संवत्सरोऽतीयात् । यद्यतीयात्र मांसमश्नीयादापशुबन्धात्—" इति ।। इति सद्यस्कालो निरूढपशुबन्धः ।। ० ।।

अथ क्रत्वर्थः पशुबन्धस्त्रेधा—एकपशुश्च त्रिपशुश्च पञ्चपशुश्चेति ।। तत्रैकपशुरग्नीषोमीयः पशुबन्धोऽग्निष्टोमाङ्गम् । ऐन्द्रपशु—त्रिपशु—वायोधसपशुभिः क्रियमाणायां सौत्रामण्यां त्रिपशुः क्रियते ।। सौत्रामणीपशुबन्धः । पञ्चपशुस्त्वग्निचित्याधर्म्मः ।। स चयनपशुबन्धः ।। अन्येष्वपि यज्ञेष्विष्टिवत् पशवो ऽङ्गानि भवन्ति ते तत्र तत्रोपेक्ष्याः ।। ० ।। ० ।।

इत्थमिष्टिः पशुश्चेति द्विधा भिन्नो देवयज्ञो व्याख्यातः । अथ पित्र्यं पितृकर्म्म । तदपि द्विविधम्—पुरुषार्थं च क्रत्वर्थं च । तत्राद्यं स्वतन्त्रं पिण्डपितृयज्ञो नाम ।। यत्तु चातुर्मास्यादियज्ञान्तराङ्गभूतं तत् क्रत्वर्थम् । तच्च पित्र्येष्टिः पितृयज्ञो महापितृयज्ञ इति चोच्यते ।।

इति हविर्यज्ञाधिकारः ।

अथातः पाकयज्ञं व्याख्यास्यामः ॥ यथा हविर्यज्ञे पुरोडाशश्रपणं भवति तथात्र चरुपाको भवति तस्मात् पाकयज्ञः । यद्वा—पाको बालः स्वल्पकायः । तस्माद्यः क्षुल्लको यज्ञः स पाकयज्ञः । यावानेकाग्नौ यज्ञो यावान् वाऽनग्नौ यज्ञः स सर्वः पाकयज्ञः ॥

अग्निस्तावत्त्रेधा—त्रेता, गृह्यः, लौकिकश्च । त्रेता, वैतानः, वैतानिकः, आरण्यः, संस्कृतो, वैदिकः, श्रौत इति तुल्यार्थाः । गार्हपत्यः आहवनीयः, दक्षिणाग्निरित्येते त्रयोऽग्नयो वितानिताः कर्मसाधका इत्यतस्ते त्रेता वैताना इति चोच्यन्ते । यस्तु दारग्रहणकालोपनीतो दायग्रहणकालोपनीतो वाग्निः स गृह्यः । दारासु शालायां च गृहशब्दः । तत्संबन्धादयमग्निर्गृह्यः ॥ गृह्याग्निः, शालाग्निः, आवसथ्यः, औपासनः, स्मार्त इत्येकार्थाः इति गोभिलगृह्यसूत्रभाष्ये ( १ प्र० १ खं ) उक्तम् ॥ एतद्भिन्नः सर्वोऽप्यसंस्कृतोऽग्निर्लौकिकः । तत्र त्रेताग्निसाध्यास्त्रयो यज्ञा वैतानिका व्याख्याताः—अतियज्ञो, महायज्ञो, हविर्यज्ञश्चेति । अथ गृह्याग्निसाध्या अनग्निसाध्याश्च पाकयज्ञाः प्रदर्श्यन्ते ॥ अल्पयज्ञाः पाकयज्ञाः इत्याहुः ॥

तत्र केचिदाहुः । एकविधः पाकयज्ञः "पाकयज्ञा इत्याचक्षते एकाग्नौ यज्ञान्" इति लाट्यायनोक्तेः । "पाकयाज्ञान् समासाद्य एकाज्यानेकबर्हिषः । एकस्विष्टकृतः कुर्य्यान्नानापि सति दैवते"—इत्यभियुक्तोक्तेश्च ॥ अथाहुः—द्विविधः पाकयज्ञः । स्थालीपाकः पशुपाकश्च । लाट्यायनीयादिषु तथैव भेदकरणात् । अथवा द्विविधः पाकयज्ञः व्रतचर्य्याश्च शान्तिकर्म्माणि चेति ॥ मानवगृह्यादौ तथैव भेदकरणात् ॥ अन्ये त्वाहुः—त्रिविधः पाकयज्ञः । हुतः प्रहुतो ब्रह्मणि हुतश्चेति । "त्रयः पाकयज्ञाः—हुता अग्नौ हूयमानाः, अनग्नौ प्रहुताः, ब्राह्मणभोजनं ब्रह्मणि हुताः ।" इत्याश्वलायनस्मरणात् ॥ परे त्वाहुः—चतुर्विधः पाकयज्ञः हुतः, अहुतः, प्रहुतः, प्राशितः इति । "चत्वारः पाकयज्ञाः" इति पारस्करस्मरणात् ॥ यत्र होम एव स हुतः । यत्र होमो बलिहरणं च स प्रहुतः । यत्र भोजनं स प्राशितः । यत्रैतेभ्योऽन्यदेव किञ्चित् सोऽहुत इति ॥ केचित्तु पञ्चविधमाहुः—

व्रतम्, वृद्धिः, पित्र्यम्, पशुः, स्थालीपाकः इति भेदात् ॥ अथान्ये नवविधमाहुः—व्रतपाकाः, वृद्धिपाकाः, पित्र्यपाकाः, पशुपाकाः, स्थालीपाकाः, उपयाचितकाः, काम्यपाकाः, पूर्तं, दत्तं चेति ॥ परे तु—इष्टमापूर्तं दत्तं चेति त्रिविधं पाकयज्ञमास्थाय व्रतपाकादीनां सप्तानामिष्टशब्देन व्यपदेशमिच्छन्ति ॥ "सायं प्रातर्नित्यहोमौ स्थालीपाको नवश्च यः । बलिश्च पितृयज्ञश्च अष्टका सप्तमः पशुः—इत्येते पाकयज्ञाः"—इति गोपथब्राह्मणश्रुतिः ( ५ प्र० २३ ब्रा० ) ॥ अष्टकाः पार्वणश्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्तपाकयज्ञसंस्थाः—इति ब्रुवन्तः सुमन्तुगौतमादयस्तु सप्तविधत्वमाहुः । हुतः, प्रहुतः, आहुतः, शूलगवो, बलिहरणं, प्रत्यवरोहणमष्टकाहोमः—

इति सप्तपाकयज्ञसंस्थाः—इति बौधायनः प्राह ॥ औपासनहोमो वैश्वदेवं पार्वणा- ष्टका मासिश्राद्धं सर्पबलिरीशानबलिरिति सप्तपाकयज्ञसंस्थाः—इत्यापस्तम्बसूत्र- व्याख्यातारः । तत्र नैते मतभेदा भवन्ति । प्रतिपत्तेरन्यथात्वेऽपि प्रतिपाद्यानन्यथा- त्वात् । अनेकरूपोपपादनस्य प्रज्ञावैशद्यार्थत्वात् ॥ तथा हि । पाकयज्ञा बहुधा संपाद्यन्ते—अग्निषु चानग्निषु च । अग्निसाध्या अपि द्विविधाः—लौकिके च गृह्ये च । तत्र गृह्याग्निसाध्यानां धर्मद्वयं भवति—हविर्यज्ञत्वं च पाकयज्ञत्वं च । ते पाकयज्ञाश्च भवन्ति हविर्यज्ञाश्च । अतएव लाट्यायनीये—सप्त हविर्यज्ञ- संस्थाः सप्त सोमसंस्थाः । तासां हविर्यज्ञसंस्थानामग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुबन्धः सौत्रामणी पाकयज्ञः—इति । ५ । ४ । २२—२३ । इत्येवं हविर्यज्ञसंस्थात्वेन पाकयज्ञमाख्याय तस्य द्वैविध्यमाचष्टे--पशुः स्थालीपाकश्चेति ॥ तत्रैनयोरेव पाकयज्ञविशेषयोर्हविर्यज्ञधर्मत्वं नान्येषामिति हि तदाशयो नतु पाकयज्ञे- यत्तायां तस्य तात्पर्य्यम् । तस्माद्धविर्यज्ञत्वमप्राप्ताः सन्त्येवान्येऽपि पाकयज्ञा इत्य- विरोधः ॥ "इडा खलु वै पाकयज्ञः"—इति तैत्तिरीयसंहिताश्रुतिः ( १ । ७ । १ ) ब्रह्मणि हुतत्वादिडायाः पाकयज्ञत्वमाचष्टे ॥ अथ त्रयः पाकयज्ञाश्चत्वारो वेत्यत्रापि नास्ति विसंवादः । अहुतानां प्रहुतेष्वन्तर्भावानन्तर्भावाभ्यां विवक्षावशात्तथोपपत्तेः ॥ अथ हुतप्रहुतब्रह्मणिहुतेषु हुतविशेषाः पशवः स्थालीपाकाश्च । तेषु स्थालीपाका द्वेधा— पार्वणस्थालीपाका गृह्यस्थालीपाकाश्च । तेषु गृह्यस्थालीपाकानामेते भेदा भवन्ति— व्रतं वृद्धिः पित्र्यं चेति । पञ्चसु नवसु वा प्रकारेषु स्थालीपाकपदं पार्वणपरम् । तस्मादविरोधः ॥ मानवीये तु गृह्ये वृद्धिपूर्तानां शिशुसंस्कारादीनां व्रतेषु पित्र्य- पशुस्थालीपाकानां शान्तिकर्मस्वन्तर्भावविवक्षणाद् द्वैविध्योपदेशः ॥ सुमन्तुगौतमा- पस्तम्बबौधायनादीनां तु स्वस्वग्रन्थे व्याख्येयतया पाकयज्ञप्रदर्शनमात्रे तात्पर्य्यं न तु तदियत्तायाम् ॥ एवमितरेतरान्तर्भावानन्तर्भावविवक्षावशान्न्यूनाधिकविभागोप- देशेऽपि न वस्तुतत्त्वापलापः क्रियते इत्यदोषः ॥ ० ॥ इह तु वयमाश्वलायनोक्त प्रकारेण त्रैविध्यमास्थाय सर्वं व्याचक्ष्महे ॥

पाकयज्ञस्त्रिविधः—हुतं, प्रहुतं, ब्रह्मणिहुतं च ॥ हविर्यज्ञानामनुविधा एकाग्नौ लघुयज्ञाः क्रियन्ते तत्र हुतशब्दः । तेषां हविर्यज्ञप्रत्याम्नायतया तदनुरूपा एव यथायथं सर्वाः संस्था इष्यन्ते । अत एव स हुतपाकयज्ञस्त्रेधा स्थालीपाकः पशुः श्राद्धं च ॥ तत्र स्थालीपाकः सप्तधा—आवसथ्याधानम्[१], औपासनम्[२], पार्वणस्था- लीपाकः[३], नभ्यकर्म्माणि[४], आग्रयणम्[५], गृह्यस्थालीपाकाः[६], काम्याः पाकाश्चेति[७] ।

दारकाले दायकाले वा कुशण्डिकयाऽग्निस्थापनं कृत्वा स्मार्त्तोऽग्निराधीयते तदा-वसथ्याधानम् । तस्याप्यग्न्याधेयवद्भेदाः स्युः ॥ तस्मिन्नेवाग्नौ सर्वे स्थालीपाकाः क्रियन्ते॥ १ ॥ आवसथ्येऽग्नौ सायं प्रातर्नित्यहोमा औपासनम् ॥ २ ॥ पौर्णमास्यां दर्शे वा क्रियमाणं कर्म्म पार्वणम् ॥ तच्च पौर्णमास्यामग्नीषोमीयम्, अमावास्यायां चैन्द्राग्नम् ॥ ३ ॥ अथ नव्यानि त्रीणि । फाल्गुन्यामाषाढ्यां कार्त्तिक्यां च कार्य्य-त्वात् ॥ ४ ॥ आग्रयणं नवयज्ञो नवसस्येष्टिरिति चोच्यते ॥ तच्च शरदि पर्वणि व्रीहिभिः, वसन्ते पर्वणि यवैः कुर्य्यात् । वर्षासु तु श्यामाकैः प्रस्तरं करोति इत्याहुः ॥ ५ ॥ अथेष्ट्यवयनवद् गृह्यस्थालीपाककर्माणि बहुधा भवन्ति । तानि त्रेधा—स्वस्तिकानि पौष्टिकानि शान्तिकानि चेति ॥ तत्र ब्रह्मचर्य्यम् । अग्नि-कार्य्यम् । सन्ध्योपासनम् । स्वाध्यायः । उपाकर्म्मोत्सर्गौ । अनध्यायाः । अवकीर्णि-प्रायश्चित्तादीनि प्रायश्चित्तकर्म्माणि । अन्तरकल्पः । उपनिषदर्हाः । ऋत्विग्वरणम् । मधुपर्कः । उपायनम् । दीक्षाः । इत्येवमादीनि स्वस्त्ययनानि । तेषां व्रतशब्देन व्यव-हारः ॥ ० ॥ अथ विवाहः । गर्भाधानम् । गर्भालम्भनपुंसवनानवलोभनानि । सीमन्तोन्नयनम् । जातकर्म । नामकर्म । आदित्यदर्शननिष्क्रमणे । अन्नप्राशनम् । चूडाकरणम् । गोदानं केशान्तापरपर्य्यायम् । उपनयनम् । समावर्त्तनम् । प्रथमगृह-प्रवेशादिवैदेशिकम् । वस्तुपरीक्षा । वास्तुकर्म्म-वंशाभिमन्त्रण मणिकावधान-गृह-प्रपदनादीनि शालाकर्म्माणि । आयोजनपर्य्ययन-प्रवपन-प्रलवन-सीतायज्ञ-खलयज्ञ-तन्त्रीयज्ञानडुद्यज्ञात्मकानि कृषिकर्म्माणि । रथारोहण-हस्त्यारोहण-नावारोहणादीनि आरोहणकर्माणि । शयनार्थं खट्वारोहणात्मकं चैत्र्यासुद्रोहणकर्म्म । आयतीकर्म्म । उतूल परिमेहः । सभाप्रवेशनम् । राजसंनाहनम् । एवमादीनि संस्कारकर्माणि पौष्टि-कानि । तान्याभ्युदयिकानि वृद्धयश्चोच्यन्ते ॥ उभयविधयोरपि मानवीये गृह्ये व्रत-चर्य्यात्वेनैव व्यवहारः ॥ अत्र विवाहे चौले उपनयने केशान्ते सीमन्ते चेति पञ्च-कर्मसु बहिःशालायां लौकिकेऽग्नौ कर्म्मेष्यते इति पारस्करीये जयरामः । आवसथ्ये वा लौकिके वेति हरिहरः ॥ चैत्र्यासुद्रोहणे स्थालीपाको नास्तीति बह्वृचः ॥ ० ॥ अथ शालकटंकट कूष्माण्डराजो स्मित देवयजनाख्यचतुर्विधविनायकशान्तयः । ग्रह-शान्तयः । अद्भुतशान्तयः । दुःस्वप्नदुर्ज्ञानदुष्क्रियाशान्तयः । दुर्योगशान्तयः । दुर्जननशान्तयः । कपोतादिशान्तयः । नष्टवस्तुशान्तिः । प्रतिपदि प्रतिपदि षाडा-हुतम् । नैजमेषमित्येवमादीनि शान्तिकानि ॥ तदित्थं व्रतं वृद्धिः शान्तिरिति त्रिधा भिन्ना गृह्यपाकाः व्याख्याताः ॥ ६ ॥

अथ काम्यपाकाः ॥ ते चतुर्विधाः—उपयाचितकाः, अष्टकाः, साध्याः,

हविर्यज्ञाश्च ॥ तत्र चैत्ययज्ञा ग्रहयज्ञाश्चेत्येवं द्विधा भिन्ना उपयाचितकाः। द्विविधा अप्येते पुनस्त्रिविधाः—शान्त्यर्थाः पुष्ट्यर्थाः, स्वस्त्ययनार्थाश्चेति। अथाष्टकाः। ताश्चतस्रः कार्त्तिक्या ऊर्ध्वाः कृष्णाष्टम्य इत्याश्वलायनीये। पारस्करीयादिषु तु तिस्र एवेष्टका इष्यन्ते। ताश्चोर्ध्वमाग्रहायण्याः प्राक् फाल्गुन्यास्तामिस्राणामष्टम्यः॥ तत्राग्रहायण्याः ऊर्ध्वं प्रथमाष्टम्यामैन्द्री। सा पूपैः क्रियते। पौष्या ऊर्ध्वमष्टम्यां वैश्वदेवी॥ माघ्या ऊर्ध्वमष्टम्यां प्राजापत्या। सा कालशाकैः। तिस्रोऽप्येतास्त्र्यह-साध्याः। तत्र सप्तम्यष्टमीनवम्यः क्रमेण—पूर्वेद्युरष्टका, अष्टका, अन्वष्टका, इत्युच्यन्ते॥ अष्टकासु चैतासु चतुर्धा प्रयोगविकल्पा भवन्ति। पशुः, स्थालीपाकः, यवसदानं कक्षदहनं चेति। तत्र पशौ पश्ववदानं च स्थालीपाकहोमश्च। द्वितीये विकल्पे स्थालीपाकहोममात्रम्। तृतीयेऽनडुद्भ्यो यवसदानम्। चतुर्थेऽग्निना कक्षदाह इति भगवानाश्वलायनः प्राह॥ अथ साध्याः॥ श्रावणीकर्म तत्र श्रावणीमारभ्य चतुरो मासान् सर्पबलिं हरति॥ एतच्च श्रवणाकर्म्म। सर्पकर्मेति चोच्यते॥ अथाग्रहायणी-कर्म। तत्र सर्पबलीनामुत्तरकालं स्थालीपाकेन सर्पयागः क्रियते, एतच्च मार्गशीर्षीकर्म, प्रत्यवरोहणं चोच्यते। आश्वयुज्यां पृषातककर्म। "दधिघृतमिश्रः पृषातक" इति मानवगृह्यटीका। "पयस्याज्ये निषिक्ते तु तत्पयः स्यात् पृषातक"मित्याश्वलायनगृह्य-टीका॥ एतच्चाश्वयुजीकर्म शंकरकर्मेति चोच्यते॥ आश्वयुज्यां ध्रुवाश्वकर्म। यस्याश्वा न सन्ति तस्याश्वपुष्ट्यर्थमेतत्कर्म क्रियते॥ ० ॥ ० ॥ फाल्गुन्यां भगार्यमयागः, अग्नीन्द्रापूपयागः, इन्द्राणीकर्म चेति॥ अथ प्रोष्ठपद्या-मिन्द्रयज्ञः॥ ० ॥ अथ शुक्लषष्ठ्यां लक्ष्मीप्राप्तिनिमित्तो यागःषष्ठीकल्पो नाम॥ ०॥ एवमादयः साध्याः काम्यपाका बहवः स्मर्य्यन्ते॥ ०॥ अथ त्रेताग्नौ त्रिविधाः काम्या आम्नाताः—इष्टयः पशवः सोमाश्च। तत्रैता इष्टयस्ते च पशवः सर्वे काम्या इहापि गृह्ये विधीयन्ते। काम्यसोमास्तु नेह भवन्ति। सोमतन्त्रस्य गृह्ये प्रतिषिद्धत्वात्॥ तदित्थमेते त्रिधा भिन्नाः काम्यपाका न शक्यन्ते साकल्येन परिसंख्यातुम्॥ काम-नावैचित्र्येणैषामसंख्येयत्वात्॥ ० ॥ ० ॥ इति सप्तसंस्थाः स्थालीपाका व्याख्याताः॥ ० ॥

अथ पशुयज्ञः। स च शूलगवो नाम रौद्रपशुः कार्त्तिक्यां वैशाख्यां रैवत्यां वा शरदि विधीयते॥ शूलगवः पशुबन्ध इति भाष्यम्॥ अपूपानेके पाकयज्ञपशू-नाहुः। अष्टकास्तिस्रोऽप्येके पशुयज्ञानाहुः॥

अथ श्राद्धम्॥ पितृकर्म्म श्राद्धम्। तत् त्रिविधम्—एकोद्दिष्टम्, अनेकदैवत्यम्। अनेकाहं च। तत्रैकोद्दिष्टं सप्तविधम्। पितृमेधः, दशगात्रम्, मासिकम्, सपिण्डी-

करणम्, पुराणम्, वृषोत्सर्गः, प्रतिसांवत्सरिकं चेति ॥ शवदाहात्मकमौर्ध्वदेहिकं कर्म्म पितृमेधः । स एकाहो वा अस्थिसंचयनावसानत्वादहीनो वा ॥ अथ दशभिरहोभिः संपाद्यं दशगात्रम् ॥

अथ मासि मासि कर्तव्यं मासिकम् । तच्चतुर्धा—आद्यमेकम् । मासिकानि द्वादश, षाण्मासिके द्वे । द्वादशमासिकमेकम्—इत्थं षोडशमासिकानि । अधिकमाससंभवे सप्तदशमासिकानि । अत्र षष्ठमासिकं षाण्मासिकं चैकस्मिन्नहनि प्राप्नोति । अतस्तयोर्भिन्नदिनकर्तव्यतामभिलष्यद्भिः पञ्चदशाहेन पञ्चाहेन त्र्यहेणैकाहेन वा न्यूने मासे षष्ठं मासिकं क्रियते तस्मात् तदूनषाण्मासिकमुच्यते। एवं द्वितीय षाण्मासिकपूर्तावूनाब्दिकं क्रियते ॥ परे त्वाहुः । आद्यश्राद्धं पाक्षिकश्राद्धं चेति द्वे पाक्षिके भवतः । तत्र द्वितीयं पाक्षिकं पञ्चदशेऽहनि वा पञ्चाहेन त्र्यहेणैकाहेन वा न्यूने प्रथममासे वा चत्वारिंशद्दिने वा क्रियते । तेन तत्पाक्षिकमुच्यते, ऊनमासिकं वा सार्द्धमासिकं वेति ॥ तदित्थं द्वे पाक्षिके द्वे च षाण्मासिके, द्वादश मासिकानीति षोडश श्राद्धानि । युक्तं चैतत्—एतस्माल्लोकादुत्क्रान्तस्यार्चिरभिसंभवतोऽहःपक्षमाससंवत्सरक्रमेणैव चन्द्रप्राप्तेर्गतिविद्यायां श्रूयमाणतया तत्क्रमेणैव तत्स्थानां पिण्डदानसंभवादित्याहुः ॥ यत्त्वत्रेदानींतनाः केचित्पद्धतिकाराश्चतुर्दशमासिकतया षोडशमासिकतया वा संकल्प्य यजन्ते तदसत् । "द्वादशमासाः संवत्सरस्त्रयोदशमासाः संवत्सर"—इति श्रुत्या मलिम्लुचमासगणनया त्रयोदशमाससंभवेऽप्येकस्मिन् संवत्सरे चतुर्दशपञ्चदशादिमासासंभवात् । चतुर्दशादिव्यपदेशेन मासिकसंकल्पस्यानृतभाषणीयत्वात् । तत्र यर्वाणस्तर्वाणन्यायेन लौकिके व्यवहारेऽनृतभाषणस्यावक्लृप्तावपि याज्ञे कर्म्मणि संकल्पवचनादौ अनृतवचनस्य "नानृतं वदेत्" इति श्रुत्या निषिद्धस्य दोषाधायकत्वाच्च । तस्मादूनमासिकोनषाण्मासिकोनवार्षिकपदैरेव व्यपदिश्य मासिकयागाः संपाद्या इत्यवधेयम् ॥

अथ सपिण्डीकरणं नाम श्राद्धं पृथग्भवति । तच्च प्रेतानां प्रेतत्वनिवर्तकं पितृत्वसमर्थकं च । अत एवेदं प्रेतदैवत्यं सपितृदैवत्यं च । अनेकदैवत्यमप्येकोद्दिष्टमेवैतत् प्रेतस्यैकस्यैव प्रेतत्वनिवर्तनाय तदाचरणात् । केचित्तु षोडशमासिकेष्वेव सपिण्डीकरणमन्तर्भावयन्ति । तदपि द्वेधा—आद्यश्राद्धस्य मासिकत्वं नास्तीत्यतस्तस्य पृथक्त्वमभ्युपेत्य सपिण्डीकरणेन षोडशमासिकपूर्त्तिरित्येकं मतम् । द्वादशमासिकं नामान्यन्मासिकं नास्तीति तत्परित्यागेन सपिण्डीकरणेन च षोडशपूर्तिरित्यपरम् । एतदुभयमप्ययुक्तमित्यन्यत्र विस्तरः ॥ ० ॥

शस्त्रादिहतानामाश्विनकृष्णचतुर्दश्यां कर्तव्यं श्राद्धं पुराणम् ॥ वृषोत्सर्गो

द्विविधः—आदिष्टः काम्यश्च । एतान्येकोद्दिष्टानि प्रेतोद्देश्यकानि । प्रतिसांवत्सरिकं तु क्षयाहश्राद्धं पित्रुद्देश्यकम् ॥ तदित्थमेकोद्दिष्टान्युक्तानि ॥

अथ पार्वणं, पुण्यपर्विकं, नाक्षत्रिकं, माध्यावर्षम्, नित्यं, नैमित्तिकं, काम्यं चेति सप्तविधमनेकदैवत्यम् । अमायां कर्तव्यं पार्वणम् । युगादिमन्वादिकल्पादिनिमित्तकं पुण्यपर्विकम् । आर्द्रागजच्छायादिनिमित्तकं नाक्षत्रिकम् । वर्षर्तुमध्ये आषाढ्या उपरिष्टादमायां कर्तव्यं माध्यावर्षम् । बलिवैश्वदेवादिकं नित्यश्राद्धम् । आभ्युदयिकं तीर्थश्राद्धं चेत्यादिकं नैमित्तिकम् ॥ कंचित् काममुद्दिश्य क्रियमाणं काम्यम् । एतत्सर्वं षट्पुरुषत्वादनेकदैवत्यं पार्वणतन्त्रतया पार्वणशब्देनैवोच्यते । एकाहास्ते भवन्ति ॥ तदित्थमनेकदैवत्यानि पार्वणतन्त्राण्युक्तानि ॥

अनेकाहं द्विविधम्—अष्टका महालयश्च । प्रौष्ठपद्या उत्तरमष्टम्यामष्टका, सप्तम्यां पूर्वेद्युरष्टका, नवम्यामन्वष्टका चेति त्र्यहमष्टका पित्र्याशाकैः क्रियते । तदिदं पितृत्रिरात्रम् ॥ अथ प्रौष्ठपदीमारभ्यामावास्यान्तमपरपक्षनिमित्तकं श्राद्धं महालयः ॥ तदिदं षोडशरात्रं पितृसत्रम् ॥ तान्येतानि श्राद्धानि ॥ तदित्थं स्थालीपाकः पशुः श्राद्धमिति त्रिधा भिन्नाहुतपाकयज्ञाः समाप्ताः ॥ ० ॥ ० ॥

अथ यत्र होमो बलिहरणं च, बलिहरणमात्रं वा स प्रहुतः । परे त्वाहुः—इष्टापूर्तदत्तान्येवैते हुतप्रहुतब्रह्मणि हुताः । तथा च—देवताप्रतिमा । देवतायतनानि । धर्मशाला । सर्वविधजलाशयाः । वृक्षारामादयः । मार्गसंस्थाः । अन्वावर्तनानि—इत्येवंविधानि पूर्तकर्म्माण्येव प्रहुतपाकाः ॥ ० ॥

अथ दत्तान्येव ब्रह्मणिहुताः पाकाः । ब्रह्मभोजः, अन्नसत्रम्, भिक्षादानमित्येवमादयः । अत्र न ब्राह्मणपात्रापात्रनियमो भवति । अनाथेभ्यो दीनेभ्यो दरिद्रेभ्योऽङ्गहीनेभ्योऽप्यन्नदानं ब्रह्मणि हुतं भवति ॥ परे त्वाहुः—

अग्निहोत्रं तपः सत्यं वेदानां चानुपालनम् ॥
आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते ॥ १ ॥
वापीकूपतडागादि देवतायतनानि च ॥
अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥ २ ॥
वाटशालां पाठशालां मठं शीतेऽनलं प्रपाम् ॥
वाटं वाटीमन्नसत्त्रं कुल्यां वाट द्रुमास्तथा ॥ ३ ॥
पण्यशालां च भैषज्यशालां पुस्तकशालिकाम् ॥
नौकां सेतुं घट्टबन्धं कुर्य्यादन्यच्च तादृशम् ॥ ४ ॥
सर्वसाधारणार्थाय प्रवर्तयति यश्चिरम् ॥

बहुद्रव्यव्ययापेक्षं कर्म तत्पूर्तमिष्यते ॥ ५ ॥
शरणागतसंत्राणं भूतानां चाप्यहिंसनम् ॥
बहिर्वेदिच यद्दानं दत्तमित्यभिधीयते ॥ ६ ॥
ससाधनं सोपभोगं स्वमर्थं यत् समर्पयेत् ॥
परस्मै तद्दरिद्राय तद्दत्तमिति कथ्यते ॥ ७ ॥
भूमिं सुवर्णं गां वस्त्रमुद्यानं पुस्तकं गृहम् ॥
औषधं भोजनं दद्यात् तद्दत्तमिति कथ्यते ॥ ८ ॥
इति पाकयज्ञाधिकारः ।

इत्थं चातियज्ञो महायज्ञो हविर्यज्ञो हुतयज्ञः प्रहुतयज्ञो ब्रह्मणि—हुतयज्ञ—इत्यते षोढा विभक्ताः सर्वे यज्ञाः भवन्ति । तेषामाद्यास्त्रयः श्रौताः । द्रष्टुर्वाक्येभ्यस्तेषां ग्रहणात् । अथ परे त्रयः स्मार्त्ताः ॥ श्रोतुर्वाक्येभ्यस्तेषां ग्रहणात् ॥

अथाहुः—सर्वे इमे यज्ञा उच्यन्ते । यजतिषु जुहोतिषु चायं यज्ञशब्दः । तत्र पुरोऽनुवाक्या याज्यावन्तस्तिष्ठद्धामा वषट्कारप्रदाना यजतयः । उपविष्टहोमाः स्वाहा-कारप्रदाना जुहोतयः । स इत्थं व्यवस्थितविषयोऽप्ययं यागशब्दः प्रायेण संकीर्ण-व्यवहारो दृश्यते । यत्रापि न तिष्ठन् जुहोति न वषट् कुरुते तत्रापि दृश्यते प्रयुक्तो यागशब्द इत्युपेक्ष्यम् ॥

अथ यत्र संवत्सरकालं कर्तव्यताऽनुवर्तते तत्राध्वर शब्दः । यथा चातुर्मास्य-मिष्ट्यध्वरो भवति ॥ सौम्याध्वरश्च वर्षान्तकालः । चयनमप्यध्वरो भवति ॥ अथ यत्र ग्रहप्रचारस्तत्र मखशब्दः । यथा ग्रहयागादिः ॥ यानि त्वङ्गभूतानि सूक्ष्माणि महान्ति वा कर्म्माणि सर्वे ते क्रतवः । त एते व्यावहारिकाः शब्दास्तत्र तत्रो-पेक्ष्याः ॥

अत्राहुः—एक एवायं सर्वो यज्ञः स एव खलु वृक्षवन्महापरिणाहः । तस्यायं विटपो य एते सर्वे यज्ञा दृश्यन्ते । स एतैर्भिन्नानेकसंस्थैस्तैस्तैः शाखायज्ञैः कृतरूपोऽय-मेको महायज्ञः प्रत्येतव्यः । स त्रिसंस्थः । तस्यैतास्तिस्रः संस्था इष्यन्ते—इष्टिः पशुः सोम इति । अस्ति स इष्टिमात्रेणायं यज्ञः संतिष्ठते न पशुं सोमं वापेक्षते । स यावदस्य वीर्य्यं तेनैव संपद्यते ॥ १ ॥ अथवा पशुपर्य्यन्तेन प्रचारितेनासौ संतिष्ठते । न सोमे सज्जते । स इष्ट्या नानिष्ट्वा पशौ प्रभवति । इष्टिपूर्वकत्वात् पशूनाम् । स याव-दस्य वीर्य्यं तेन संपद्यते ॥ २ ॥ अथवा सोमेन यज्ञः संतिष्ठते स नेष्ट्याऽनिष्ट्वा न वा पशुना विना सोमः कृतो भवति । इष्टिपूर्वकत्वात् पशुपूर्वकत्वाच्च सोमस्य । तथा चायं यज्ञः संपूर्णावयवः पूर्णबलो भवति । स यावदस्य वीर्य्यं तेन संपद्यते । अथवाऽयं

मेकाहाहीनसत्रात्मके सोमेऽपि यदि कामयते—एकाहस्यैव ज्योतिष्टोमस्य सप्तसंस्थस्य प्रथमायामेव संस्थायां यज्ञं संस्थापयति तृतीयस्यां वा चतुर्थ्यां पञ्चम्यां षष्ठ्यां सप्तम्यां वा । यदि कामयते एकाहेनैव ज्योतिष्टोमादिना संस्थापयति नापेक्षतेऽहीनं सत्रं वा । अथाहीनेन द्वादशाहेन सत्रेण वा संस्थापयति । अथ यदि कामयते सोऽग्निचिद्भवति । स नेष्टिं पशुं सोमं वा तत्राकृत्वा तमग्निं चिनुते । स यावन्त्यत्र वीर्याणि सर्वाणि तानि संपादयमानः कृतकृत्यो भवति । स इत्थं कामप्रो यज्ञः सर्वान् कामान् यथायथं दुग्धे । स्मर्य्यते च ।

"सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ॥
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥
देवान् भावयतानेन ते देवा भावयन्तु वः ॥
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ" इति

एतानि चैषां यज्ञानां वीर्याणि श्रूयन्ते—

सायं प्रातर्ह वा अमुष्मिन् लोकेऽग्निहोत्रहुदश्नाति । तावतीह तस्मिन् यज्ञे ऊर्क् ॥ १ ॥ अर्द्धमासेऽर्द्धमासे दर्शपूर्णमासयाजी ॥ २ ॥ चतुर्षु चतुर्षु मासेषु चातुर्मास्ययाजी ॥ ३ ॥ षट्सु षट्सु पशुबन्धयाजी ॥ ४ ॥ संवत्सरे संवत्सरे सोमयाजी ॥ ५ ॥ शते शते संवत्सरेष्वग्निचित् काममश्नाति कामं न ॥ तद्वैतद् यावच्छतं संवत्सराः— तावदमृतमनन्तमपर्य्यन्तम् । तस्य यदपीपीकयेवोपहन्यात् तदेवास्यामृतमनन्तमपर्य्यन्तं भवति—इति ॥ ० ॥

उक्ताः सर्वे यज्ञाः । एतैश्च कृतैः कर्तुरात्मा संस्क्रियते । ते चात्मनः संस्कारा द्विविधाः—दैवसंस्कारा आर्षसंस्काराश्च । तत्र अग्निहोत्रादिभ्यो विश्वसृजामयनान्तेभ्यः श्रौतेभ्यो यज्ञेभ्यः साध्या दैवाः । अथ निषेकादिश्मशानान्तेभ्यः स्मार्त्तेभ्यः साध्या आर्षाः ॥ उभयविधा अप्येतेऽतिशयाधानात्मकाः संस्कारा दोषमार्जनात्मकसंस्कारानन्तरेण नोत्पद्यन्ते ॥ तैलाक्तमलिने वस्त्रे रञ्जनानुत्पत्तिवत् । तस्मात् स तृतीयः संस्कारः सामयाचारिको नामेष्यते श्रौतस्मार्त्तोपायभूतः । यः समयकृतो यश्चाचारसिद्धः कर्तव्यतानियमः स इहैकशब्देनोच्यते सामयाचारिक इति ॥ तत्र समयः, संकेतः, संवित्, संप्रतिपत्तिरित्येकार्थाः । स च सामयिको राजधर्मादिः समयभेदाद्भिद्यते । अथाचारधर्मः शरीरकुलदेशभेदात् त्रिधा भिन्नः । तत्र शरीराचारः शुद्धिः । सा पञ्चधा भिद्यते देहशुद्धिः । द्रव्यशुद्धिः । अघशुद्धिः । एनःशुद्धिः । भावशुद्धिश्चेति । एवं कुलाचारः कुलपरम्परानियतः कर्तव्यताविशेषः । देशाचारोपि तत्तद्देशे परम्परा सिद्धप्रचारविषयोऽर्थः । न चानाचारस्याशुद्धात्मनोऽन्ये संस्काराः श्रौताः स्मार्त्ता वा अभ्यु

पद्यन्ते। तस्मादाचारः प्रधानम्। तान्येतानि सर्वाणि कर्म्माण्युच्यन्ते। ये चैतेभ्यः कृतेभ्यः कर्तुरात्मन्यपूर्वा अतिशया उत्पद्यन्ते तान्यपि कर्म्माविनाभूतानि कर्माण्युच्यन्ते कर्म्माण्येव धर्माः। अदृष्टा अपूर्वाः आधेयातिशयाः आत्मनःसंस्कारा भावनाख्या धर्माः। आहिताश्चातिशया वासनाख्या धर्माः। ये चातिशयाधायकाः व्यापारास्तेऽपि कर्त्तव्यतया विहिता आधिकारिका धर्माः। यद्व्यतिरेकेण चैषां सर्वेषामनुपपत्तिस्ते सामयाचारिकाः परमा धर्माः। तदित्थं धर्मश्चतुर्धा—श्रौतधर्मः। स्मार्तधर्मः। आचारधर्मः। समयधर्मश्चेति। तत्र समयधर्मेणाचारधर्मः संपद्यते। आचारेण स्मार्त्तः। स्मार्त्तेन श्रौतः। श्रौतेनाभ्युदयः संपद्यते निःश्रेयसं च। स पुरुषार्थः सर्वेषां पौरुषाणामानन्दपरमत्वात्॥

यज्ञःस्वयम्भूर्वरुणः सूर्य्यः पृथ्वी च चन्द्रमाः॥
पशुर्यज्ञोऽत्र यज्ञोऽहं यज्ञैर्यज्ञोऽयमिज्यते॥ १॥
यज्ञस्य यज्ञतां ज्ञात्वा यज्ञैर्यज्ञं यजेत यः॥
यद्यदिच्छति तत्सर्वं स साधयति यज्ञतः॥ २॥

इति श्रीमद्धामहोपदेशक—समीक्षाचक्रवर्त्ति
श्रीमधुसूदन विद्यावाचस्पति प्रणीते
यज्ञमधुसूदनाभिधे यज्ञशास्त्रे
यज्ञविटपाध्यायोऽयं
संपूर्णः॥

# शुद्धिपत्रम्

| पृष्ठम् | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | २२ | पिण्डापतृ | पिण्डपितृ |
| २ | २ | पोडशीग्रहणात् | पोडशिग्रहणात् |
| २ | २६ | धर्मः | घर्मः |
| २ | २६ | जह्वोति | जुह्वोति |
| ३ | १ | प्रवृञ्ज्यात् | प्रवृञ्ज्यात् |
| ३ | ३ | धर्मयागः | घर्मयागः |
| ३ | ५ | अतियज्ञः | अतियज्ञाः |
| ३ | ८ | कर्मांति तानि । अतोनि | कर्मांति । तान्यतीनि । |
| ३ | १० | तान्यतीनि | तान्यतीनि—इति वाजिश्रुतेः । |
| ३ | २६ | महायज्ञः | महायज्ञाः |
| ४ | २ | पर्य्यन्ता | पर्य्यन्ता |
| ४ | १८ | वाजपेयस्त मः | वाजपेयस्तोमः |
| ५ | ४ | मग्निष्टामः | मग्निष्टोमः |
| ५ | २० | भवति इति ॥ | भवति इति ॥ अथास्मिन् ज्योतिष्टोमे चतुःष्टोमे सामानि प्रयुज्यन्ते । तानि प्रकरणशुद्ध्यर्थमुपरिष्टान्महायज्ञाधिकारान्ते पृथक्कृत्योपदर्शयिष्यामः ॥ |
| ५ | २४ | सर्वजितस्तोमः | सर्वजित्स्तोमः |
| ५ | २८ | ३० एट् | ३० राट् |
| ५ | ३० | ४६ मरापः | ४६ मरायः |
| ६ | ६ | चतुर्वंश | चतुर्विंश |
| ६ | ७ | छन्दोभवत् | छन्दोमवत् |
| ६ | ८ | स्वरसामन | स्वरसामान |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७ | (चक्रे) | व्यूढछन्दा | व्यूढच्छन्दा |
| ७ | ४ | भियथा | भिर्यथा |
| ८ | (चक्रे) | | ६ |
| ८ | २ | छन्दोमाश्चान्तरेण | छन्दोमांश्चान्तरेण |
| ८ | ३ | पृष्टया | पृष्ठ्या |
| ८ | ६ | गोरायुः | गौरायुः |
| ९ | १ | ायणीय | प्रायणीयः |
| ९ | २ | प्रायणयिः | प्रायणीयः |
| ११ | २ | द्वितीयमहः तदा | द्वितीयमहः । तदा |
| ११ | ५ | चतुथाः | चतुर्थाः |
| ११ | २० | प्रतिमान् | प्रतिलोमान् |
| १२ | ४ | विपुवत् | विपुवत |
| १२ | १७ | त्रिकद्रक | त्रिकद्रुक |
| १२ | २४ | पञ्चाहः | पञ्चाहः कार्यः । |
| १३ | ३ | त्रिकद्रक | त्रिकद्रुक |
| १३ | २१ | प्रतिपस्थाता | प्रतिप्रस्थाता |
| १३ | २३ | तेव | तेन |
| १४ | १८ | द्वादश संवत्सरं | द्वादशसंवत्सरं |
| १४ | १९ | षट् त्रिशन संवत्सरं | षट्त्रिंशत्संवत्सरं |
| १४ | २५ | पृष्ठ्यं षडह | पृष्ठ्यषडह |
| १५ | १९ | नैतधवे | नैतन्धवे |
| १५ | २२ | परीणहिस्थाने | परीणहि स्थाने |
| १५ | २९ | महासत्राणि | महासत्राणि । |
| १६ | ५ | स्वाधायो | स्वाध्यायो |
| १६ | १८ | से म | सोम |
| १६ | १९ | नेवाष्ट्वा | नेष्ट्वा |
| १७ | १६ | ऽभिनिवतते | ऽभिनिर्वर्त्तते |
| १८ | ७ | न्यन्तानि | न्यनन्तानि |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १८ | २७ | शाकंरी | शाकरी |
| १८ | २८ | ( तां ७ । ६ । १४ ) | ( तां ७ । ८ । १४ ) |
| १९ | ६ | मनसाऽवीद्यो | मनसाऽन्वीद्यो |
| १९ | ७ | ह्नीति | हीति |
| १९ | ११ | इति देवतासु | इति राजनं देवतासु |
| १९ | १७ | ताण्ड्यश्रुति | ताण्ड्यश्रुति |
| १९ | १७ | अवारयन्तं | अवारयन्त |
| १९ | २० | अस्यां पङ्क्तौ 'अपि चाहुः' इत्यारभ्य 'सर्वस्मिन् प्रोतम्' इत्येतदन्तं सर्वमपि चतुर्दशपरिच्छेदीय पञ्चविंशपंक्तिस्थ 'सर्वसामेति प्रतीयात्' इत्यस्यानन्तरं पठनीयम् । 'सर्वस्मिन् प्रोतम्' इत्यस्यान्ते 'इत्याहुः' इति च । | |
| २० | ७ | प्राणावेऽपानौ | प्राणोऽपानौ |
| २० | १३ | गौरिवितम् | गौरिवीतम् |
| २० | १७ | अमहीयवम् | आमहीयवम् |
| २२ | ७ | सामः | साम |
| २२ | ७ | सामः | साम |
| २२ | १० | स निधनम् | तन्निधनम् |
| २२ | १४ | सप्तभक्तिकं साम ॥ २ ॥ | सप्तभक्तिकं साम ॥ २ ॥ इति सामक्लृप्तिप्रकरणं समाप्तम् । |
| २३ | ६ | नवसस्या उत्पद्यन्ते | नवसस्यान्युत्पद्यन्ते |
| २३ | ६ | अ-यण | अयण |
| २३ | २३ | वैमध्येति | वैमृध्येति |
| २४ | ४ | माज्यम | माज्यम् |
| २४ | ६ | भवति न | भवति । |
| २४ | १४ | सरस्वत्यै | सरस्वते |
| २५ | ६ | दीक्षितायनानि | अदीक्षितायनानि |
| २६ | ६ | मभ्युदष्टेष्टिः | मभ्युद्दष्टेष्टिः |
| २६ | ६ | दभ्युदष्टा | दभ्युद्दष्टा |
| २७ | १ | प्रातरीष्टिः | प्रातरिष्टिः |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २७ | ७ | मकरणा | मकरणे |
| २७ | ११ | अनकिवती | अनीकवती |
| २७ | १६ | श्वश्रुरीया | श्वशुरीया |
| २७ | २० | मदीष्ठिः | मदिष्टिः |
| २७ | २० | वदीष्ठिः | वदिष्टिः |
| २७ | २३ | निवृतीष्ठिः | निवृत्तीष्टिः |
| २८ | १७ | श्वसुरीया | श्वशुरीया |
| २६ | ७ | मतेष्टिः | मतीष्टिः |
| ३० | ४ | चरु | चरुं |
| ३० | २२ | जयादिभिः | जपादिभिः |
| ३१ | ४ | वाज्यभागो | वाज्यभागौ |
| ३१ | १८ | अथाक्तं | अथोक्तं |
| ३१ | २२ | तत्रेक | तत्रैक |
| ३२ | २ | चल्लक | चुल्लक |
| ३३ | २३ | तत्वा | तत्त्वा |
| ३४ | १६ | वस्तुपरीक्षा | वास्तुपरीक्षा |
| ३४ | २० | उतूल परिमेहः | उतूलपरिमेहः |
| ३४ | २५ | शालकटंकट कूष्माण्ड— राजो स्मित देव | शालकटंकटकूष्माण्ड— राजोस्मितदेव |
| ३४ | २६ | अद्भूत | अद्भुत |
| ३५ | ४ | एवेष्टका | एवाष्टका |
| ३५ | ६ | माध्या | माघ्या |
| ३७ | ११ | पित्र्याशाकैः | पित्र्या शाकैः |
| ३७ | १६ | ब्रह्माणि हुताः | ब्रह्मणिहुताः |
| ३७ | २७ | द्रुमास्तथा | द्रुमांस्तथा |
| ३८ | ६ | इत्यते | इत्येते |
| ३६ | १३ | दश्नानि | दश्नाति |
| ३६ | १६ | तद्वैतत् | तद्धैतत् |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ३९ | २२ | रज्जना | रञ्जना |
| ३९ | २८ | तत्तदे्शे | तत्तद्देशे |
| ४० | ७ | धर्मणा | धर्मेणा |

अथ

श्रीयज्ञमधुसूदने

# कर्म्मानुक्रमणिकाध्यायः

( पञ्चमः )

## अग्न्याधेयकर्म्मणामनुक्रमं दर्शयामः—

१ कूष्माण्डहोमः
२ गणहोमः
३ नान्दीश्राद्धम्
४ उदकशान्तिः
५ प्रतिसरबन्धः
६ पवनाचमनमार्जनानि
७ पुण्याहवाचनम्
८ मातृकापूजा चेत्येतानि बहिरङ्गाणि गुणकर्म्माणि ॥

इति प्रथमं पर्व ॥ १ ॥

१ अथ सङ्कल्पः
२ ऋत्विग्वरणम्
३ मधुपर्कः
४ देवयजनयाचना
५ अग्न्यायतनसंस्कारः
६ सम्भारसम्भरणम्
७ गोपितृयज्ञः
८ औपासनाग्नौ सर्वौषधिहोमः
९ ब्रह्मौदनप्राशनं सदक्षिणादानं चेत्तानि अन्तरङ्गाणि गुणकर्म्माणि पौर्विकाणि ॥

इति द्वितीयं पर्व ॥ २ ॥

१० अथ मन्थनेनाग्निसंपादनम्
११ अग्नित्रयाधानम्
१२ त्रेताग्नौ उत्तरः सर्वौषधिहोमः
१३ पञ्चसमिद्धोमः
१४ आहितसर्वाग्न्युपस्थानम्
१५ आहितसर्वाग्निजपः
१६ आहितप्रत्येकाग्न्युपस्थानम्
१७ पूर्णाहुतिः
१८ उत्तरः कूष्माण्डहोमः

इति तृतीयं पर्व ॥ ३ ॥

तदित्थं कूष्माण्डहोमादि—कूष्माण्डहोमान्तं कर्म्माग्न्याधानमुच्यते—इत्येकः पक्षः। सङ्कल्पादिपूर्णाहुत्यन्तमेवेदमग्न्याधानमित्यन्यः पक्षः ॥

वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः। वर्षासु निषादस्थपतीन् याजयेत्! सूर्य्यनक्षत्रेऽग्नीनादध्यात्। अथ आषाढ्या उत्तरस्यामम पुनर्वस्वोः पुनराधानमादध्यादित्याहुः। तदिदमग्न्याधानमध्यात्मं याज्ञिकदैवासंपत्त्यर्थमनुष्ठीयते ॥

# अथाग्निहोत्रकर्म्मानुक्रमणी ।

१ होमारम्भः
२ विहरणोद्धरणम्
३ अच्छिन्नधारा
४ पूर्वाहुतिः
५ उत्तराहुतिः
६ शेषप्राशनम्
७ उदकाहुतिहोमः
८ समिदाधानम्
९ उद्धरणम्

इत्थं विहरणाद्युद्धरणान्तं कर्म्माग्निहोत्रमुच्यते । उदितेऽनुदिते समयाध्युषिते वा प्रातः सायं च तदग्निहोत्रं यावज्जीवनमहरहः कुर्य्यात् । सोऽयमग्निहोत्रयागोऽहोरात्रविभक्तपाक्षिकाग्निसंस्कारार्थो विधीयते ॥

# अथ दर्शपूर्णमासेष्टिकर्म्मानुक्रमणी ।

१ अन्वारम्भणीयेष्टिः
२ पुनराधानम्
३ अग्न्युद्वासनीयेष्टिः
४ अग्निशालापात्राणां संस्काराः
५ गोपितृयज्ञो विकल्पितः
६ संभारसंभरणम्
७ ब्रह्मौदनपाकः
८ अग्निमन्थनम्

इत्यपूर्वेष्टिप्रयोगे पूर्वाङ्गानि ॥

अग्नित्रयपुनराधानम्
पुनराधानहोमः
पुनराधेयेष्टिः
अन्वाधानम्
अग्निवारुणीष्टिः
द्वितीयपुनराधानम्
विच्छिन्नाग्न्याधानम्
प्रवासोपस्थानम्
आहिताग्नेः प्रवासविधिः
प्रवासादागमनविधिः

इति नैमित्तकाङ्गानि ॥

शुक्लप्रतिपदि दर्शेष्टिः कृष्णप्रतिपदि पूर्णमासेष्टिः ; ततः पूर्वेद्युः पर्वदिनमुपवसथाहः

१ उपवसथाहे व्रतोपायनं प्रथमविकल्पः आरण्याशनम्, आहवनीयागारे गार्हपत्यागारे वा दम्पत्योरधः शयनम् ।
२ दर्शेष्टौ सांनाय्यदधिसंपादनम्
२ इध्मावर्हिः संपादनम्

इति प्रथमे पर्वण्युपवसथाहकर्म्माणि ॥

१ ब्रह्मवरणम्
२ अपां प्रणयनम्
३ पात्रासादनप्रोक्षणादिपात्रसंस्काराः
४ वाग्यमः
५ पुरोडाशसंपादनम्
६ वाग्विमोकः

व्रतोपायनं द्वितीयविकल्पः ।

७ वेदीनिर्म्माणम्
८ इध्मावर्हिःस्रुचां प्रोक्षणादितन्त्रमन्तवेदिद्रव्यसंस्काराः
९ अग्निसंस्काराय सामिधेनीकर्म्म

१० आज्यहविः पूर्णानां स्रुचां पुरोडाश- सांनाय्ययोश्च वेद्यामासादनम्। व्रतोपायनं तृतीयविकल्पः।

इति पूर्वाङ्गकर्म्माणि प्रथमं पर्व ॥ १ ॥

११ पुरः स्वस्त्ययनम्

१२ पञ्चानुवाचनानि

१३ पूर्वाघारान्गिसंमार्गोत्तराघाराः

१४ होतृत्रयप्रवरणम्

१५ पुनः स्वस्त्ययनम्

इति पूर्वाङ्गकर्म्माणि द्वितीयं पर्व ॥ २ ॥

१६ स्रुगाद्यापनकर्म्म

१७ सामिधेन्यकर्म्म

१८ पञ्च प्रयाजयागाः

१९ आज्यभागौ द्वौ

इति पूर्वाङ्गकर्म्माणि तृतीयं पर्व ॥ ३ ॥

अथेह त्रयः प्रधानयागाः—

एतदेव च प्रकृतिविकृतीनामावापस्थानम् ॥

२० स्विष्टकृद्धोमः

इत्युत्तराङ्गकर्म्म प्रथमं पर्व ॥ १ ॥

२१ इडाभागभक्षणं नाम हविःप्राशनम्

२२ त्रयोऽनुयाजयागाः

इत्युत्तराङ्गकर्म्म द्वितीयं पर्व ॥ २ ॥

२३ सूक्तवाकः शंयुवाकश्च

२४ पत्नीसंयाजः

२५ याजमानं कर्म्म

२६ पिण्डपितृयज्ञः

इत्युत्तराङ्गकर्म्म तृतीयं पर्व ॥ ३ ॥

इत्थं व्रतोपायनादिपिण्डपितृयज्ञान्तं याजमानान्तं शंयुवाकान्तं वा कर्म्म दर्शपौर्णमासमित्युच्यते। शुक्लप्रतिपदि दर्शेष्टिं कृष्णप्रतिपदि पूर्णमासेष्टिं यावज्जीवनं त्रिंशद् वर्षाणि वा कुर्य्यात्। सोऽयं दर्शपूर्णमासयागः पक्षद्वयविभक्तमासिकाग्निसंस्कारार्थो विधीयते ॥

## आग्रयणम्।

अथाग्रयणं नामेष्टित्रयं भवति।

१शरदि व्रीह्याग्रयणम्=शारदनवान्नेष्टिः।

२वर्षासु श्यामाकाग्रयणम्=वार्षिकनवान्नेष्टिः

३वसन्ते यवाग्रयणम्=ग्रैष्मनवान्नेष्टिः। इति

अस्य चाग्रयणस्य पौर्णमासतन्त्रत्वात् सर्वं पौर्णमासवत्। किन्तु प्रधानयाग— स्विष्टकृद्धोमयोर्मध्ये उपहोमो विशेषः। सर्वान्ते च ब्राह्मणतर्पणं विशेषः। नवान्नानां व्रीहिश्यामाकयवानामग्निहोत्रहोमानन्तरं समन्त्रकं भक्षणं भवति। अथवा नवान्नं व्रीह्यादिकं गां भक्षयित्वा तत्पयसाऽग्निहोत्रहोमं नैत्यकं कृत्वा समन्त्रकं भक्षणं भवति। इयं नवान्नेष्टिरप्युच्यते। एवं सवनेष्टिकाम्येष्टयस्तत्तद्विकृतिविशेषैरनुसन्धेयाः। एतच्चेष्टित्रयमृतुसन्धिषु त्रिषु नवसस्योत्पत्तौ प्रथमप्राशननिमित्तं कुर्य्यात् ॥

## चातुर्मास्यम्।

अथ चातुर्मास्ययागो नामाध्वरश्चतुःपर्वा भवति—

१ फाल्गुन्युत्तरप्रतिपदि वैश्वदेवीष्टिः

२ आषाढ्युत्तरप्रतिपदि वरुणप्रघासः

३ कार्त्तिक्युत्तरप्रतिपदि साकमेधः
४ कार्त्तिक्युत्तरप्रतिपदि शुनासीरीयम्
एषां कर्म्मानुक्रमण्यो यथा—
वैश्वानरपार्जन्येष्टिः—
१ शाखाहरणम्
२ अन्वाधानम्
३ पञ्चहोत्राहुतिः
४ वाजिनयागः
५ समिष्टयजुः

इति वैश्वदेव पर्व ॥ १ ॥

१ पशुबन्धवेदिः
२ उत्तरवेदिनाभिः
३ चात्वालः
४ उत्करः
५ मारुतीवेदिः=प्रतिप्रस्थातृवेदिः
६ औत्तरवेदिकम्। तत्र उत्तरवेदिसंस्कारश्चात्वालसंस्कारश्च
७ अग्निप्रणयनम्
८ प्रणीताग्न्यभिहोमः
९ मारुतीप्रचारः ( यागः )
१० वारुणीप्रचारः ( यागः )
११ एककपालयागः
१२ अवभृथेष्टिः
१३ व्रतविसर्गः

इति वरुणप्रघास पर्व ॥ २ ॥

१ अग्निहोत्रहोमः
२ अनीकवतीष्टिः
३ सांतपनेष्टिः
४ गृहमेधेष्टिः
५ पौर्णदर्वहोमः
६ क्रीडीयेष्टिः
७ महाहविर्यागः
८ पैतृकवेद्यां महापितृयज्ञो नाम पित्र्येष्टिः
९ त्र्यम्बकयागः=तत्र प्रसिद्धेष्टिः, आदित्येष्टिश्च

इति साकमेध पर्व ।

१ शाखाहरणम्
२ अन्वाधानम्
३ शुनासीरीययागः

इति शुनासीर्य्य पर्व ।

स एष चातुर्मास्यनामाध्वरयागश्चतुर्भिर्म्मासैः परिवर्तमानानामग्निवायुसोमानामृतुसन्धिषु त्रिषु तत्तद्देवतासन्धानार्थश्चातुर्मास्यविभक्ताग्निसंस्कारतया विधीयते ॥

## अथ पशुः ।

पशुबन्धो नाम यागश्चतुर्धा व्याख्यायते—निरूढपशुबन्धः, चरकसौत्रामणीपशुबन्धः, कौकिलसौत्रामणी पशुबन्धः, आश्वलायनसौत्रामणीपशुबन्धश्चेति ॥

### तत्रादौ निरूढपशुबन्धस्यानुक्रमणी भवति ।

( १ )—१ नान्दीश्राद्धम्
२ उदकशान्तिः
३ प्रतिसरबन्धः
४ स्नानादिपञ्चकम्
५ पुण्याहवाचनम्

इत्यङ्गकर्म्माणि प्रथमं पर्व ॥ १ ॥

( २ )--६ सङ्कल्पः
७ ऋत्विग्वरणम्
८ उदवसानम्
९ अग्निमन्थनम्
१० अग्निविहरणम्
११ यूपाहरणम्
१२ पाशुकवेदिः
१३ उत्तरवेदिस्तन्नाभिश्च
१४ चात्वालः
१५ उत्करः
१६ यजमानसंस्कारः
१७ पात्रसंभारसंस्काराः
इत्यङ्गकर्माणि द्वितीयं पर्व ॥ २ ॥

( ३ )—१८ अग्निहोत्रहोमः
१९ आग्नेयोष्टिः पशुपूर्वेष्टिर्वा

( ४ ) सवस्कालपशुप्रकारभेदे—
१ पशुदेवतासंकल्पः
२ पाशुकपात्रासादनम्
३ यूपावटपरिलेखनम्
४ पाशुकस्रुगासादनम्
इति पश्वङ्गप्राकृतम् ॥ १ ॥

( ५ ) अथ केवलपाशुके—
१ यूपप्रोक्षण-शकलप्रक्षेपादि-
भिर्यूपसंस्कारः ।
२ पशुप्रायश्चित्ताहुतयः
३ पशुपाककरणम्
४ अग्निमन्थनम्
५ पशुसंज्ञपनम्
६ वाशनादिनिमित्ताहुतिः
७ संज्ञप्ताहुतिः

८ वपासाधनम्
९ स्तोकाहुतिः
१० वपासंस्कारः
११ आज्यभागौ
१२ वपाप्रचारः ( यागः )
१३ पशुपुरोडाशसंपादनम्
१४ अङ्गयागः
१५ दिग्घोमः
१६ वनस्पतियागः
१७ पश्विडाप्राशनम्
१८ उपयाजहोमाः
१९ स्वरुहोमः
२० समिष्टियजुः
२१ पाशुकसक्तुहोमः
२२ उपस्थानानि
२३ पाशुकाग्नेयेष्टिः
२४ पाशुकाग्नावैष्णवेष्टिः
२५ अनुवचनम्
२६ सामिधेन्यम्
२७ षट्प्रवृत्ताहुतयः
२८ मैत्रावरुणदण्डप्रदानम्
२९ प्रयाजयागः
३० आज्यभागौ
३१ पशुपुरोडाशप्रचारः
३२ पशुस्विष्टकृद्यागः
३३ अनुयाजः
३४ पाशुकसमिदाधानम्
एतावत् सर्वं पाशुकं कर्म्मोच्यते ।
इति निरूढपशुकर्म्माणि ॥ १ ॥

## अथ चरकसौत्रामणीपशुबन्धपदार्थसूची प्रारभ्यते—

१ फाल्गुन्युत्तरासु नवमीदशम्येकादशीषु सुरासन्धानादिकर्म्माणि
२ द्वादश्यां नान्दीश्राद्धमुदकशान्तिः, प्रतिसरबन्धः, इत्यादीनि बहिरङ्गकर्म्माणि
३ त्रयोदश्याम्—ऐन्द्रपशुयागः, आदित्यचरुश्च ।

इत्यङ्गकर्म्म, प्रधानं वा ।

४ चतुर्दश्यां त्रिपशूपवसथः ।
५ पर्वणि त्रिपशुः । अवभृथः

इति प्रधानमेव कर्म ।

६ महापितृयज्ञः पर्वणि प्रतिपदि वा विकल्पेन कार्य्यः ।
७ प्रतिपदि वायोधसपशुयागः । आदित्यचरुश्च ।

इत्युत्तराङ्गकर्म, प्रधानं वा ।

८ यदि चयनमपि चिकीर्षति, तदा प्रधानभूते त्रिपशावेव कुर्य्यान्नत्वाद्यन्तयोः पश्वोः । तयोरङ्गत्वात् । समप्राधान्यपक्षे तु तयोरपि यथेच्छं चयनं कुर्य्यात् ।

९ ऐन्द्रपशु-त्रिपशु-वायोधसपशूनामेकप्रयोगत्वादुदवसानमृत्विग्वरणकूष्माण्ड-हवनादीनि च कर्म्माणि सर्वपश्वर्थं सकृदेव कार्य्याणि । एको विहारः । एको च दक्षिणतः पैतृकी वेदिः । पाशुकी तु वेदिर्भिद्यते । तत्राद्यन्तयोर्द्वादशपदा वेदिः कार्य्या, त्रिपशौ त्वष्टादशपदा सा भवति ।

### इति चरकसौत्रामणीविशेषविधिः ।

( )—१ कौकिलसौत्रामणीसङ्कल्पः
२ ऋत्विग्वरणम्
३ इडाजपः
४ अन्वारम्भणीयेष्टिः
५ उदवसानम्
६ अग्निमन्थनम्
७ मनस्वत्याहुतिः
८ ऐन्द्रपशुसङ्कल्पः
९ पक्षान्तरे त्वत्रैवाग्निचयनसङ्कल्पो वा ।
१० अग्निविहरणम्
११ षड्ढोतृकूष्माण्डसारस्वतहोमाः
१२ पश्विष्टिः ।
१३ वेदियूपसंस्कारो निरूढपशुबन्धवत् ।

### इति कौकिलसौत्रामण्यां पूर्वपशुविधिः

१४ पुनर्विहरणम्
१५ आदित्येष्टिः
१६ यजमानानुमन्त्रणम्

इति सौत्रामणीपूर्वेष्टिविधिः ॥

ततो द्व्यहो वा सद्यो वा त्रिपशुः ॥

१ त्रिपशुसङ्कल्पः
पक्षान्तरे त्वत्रैवाग्निचयनसङ्कल्पो वा ।
२ पाशुकवेदिनिर्म्माणम्
३ अग्निविहरणम्
४ अन्वाधानादि व्रतोपायनम्
५ शाखाहरणादि
६ यूपावटपरिलेखादि
७ चात्वाललेखनादि
८ उत्तरवेदिनाभिप्रच्छादनान्तम्
९ खरद्वयनिर्म्माणम्
१० तयोः स्रुगासादन-ग्रहासादने
११ अभ्यादानादियूपावटकरणान्तम्
१२ संस्रावाभिघारणादि
१३ सिकतासमीकरणान्तम्
१४ शाखापवित्रमुपवेषश्च
१५ अग्निप्रणयनम्
१६ ब्रह्मयजमानयोः स्वे उपवेशनम्
१७ पात्रसंस्कारासादने
१८ अपकृष्य महारात्रेऽग्निहोत्रम्
१९ आग्नेयी पविष्टिः

**इति त्रिपशौ पूर्वकर्म्माणि ।**

अथ समर्शनादि
१ सुरापयसोरुत्पवनान्तं कर्म्म ।
२ पयोग्रहासादनम्
३ सन्नग्रहोपस्थानम्
४ सौत्रामणोपशुकर्म्म
५ वपाप्रचारान्तं पाशुकम्
६ वपामार्जनान्तम्
७ सुराग्रहहोमः
८ सुराग्रहभक्षणम्
९ सुरोपस्थानम्
१० पितृतर्पणम्
११ पित्रुपस्थानम्
१२ पैतृकहोमः

इति त्रिपशौ सुराग्रहप्रचारः ।

१ आश्विनकुष्ठिकशफहोमाः
२ सारस्वतकुष्ठिकशफहोमाः
३ ऐन्द्रकुष्ठिकशफहोमाः
४ आसन्द्यां यजमानाभिषेकः
५ व्यस्तव्याहृतिहोमः
६ मङ्गलाह्वानम्
७ चयनपक्षे मृत्युग्रहहोमः
८ मृत्युग्रहभक्षः
९ उपयाजप्रचारः
१० समिष्टयजुः
११ विष्णुक्रमः
१२ व्रतविसर्गः
१३ अवभृथः
१४ ब्राह्मणतर्पणम्

इति प्रधानत्रिपुरुषविधिः ।

१५ अग्निविहरणम्
१६ महापितृयज्ञः

इति पर्वदिनाङ्गकर्म्मविधिः ।

१७ अथोत्तराङ्गमैन्द्रपशुर्वायोधसः
१८ पुनरादित्येष्टिः
१९ पुनरग्निमन्थनविहरणे
२० अग्निहोत्रम्

इति कौकिलचरकाभ्यां द्वेधा विभक्तः सौत्रामणी प्रयोगः ।

(४)—आश्वलायनीये तु—

१ परिविष्टिः, अग्निप्रणयनं, मन्थनञ्च ।
२ आवाहनादि
३ एकादश प्रयाजाः
४ आज्यभागप्रचारः
५ वपायागः
६ पुरोडाशयागः
७ स्विष्टकृद्यागः
८ मनोतानामाङ्ग्यागः
९ वनस्पतियागः
१० अनुयाजाः

इति सौत्रामणीपूर्वाङ्गमैन्द्रपशुः

११ आदित्येष्टिः = ऐन्द्रपश्वङ्गम् ।
१२ परिविष्टिः, अग्निप्रणयनं, मन्थनञ्च ।
१३ आवाहनादि प्राग्वत्
१४ सौत्रामण्याश्विनयागः ।
१५ सौत्रामणीसारस्वतयागः ।
१६ सौत्रामणीप्रधानैन्द्रवपायागः
१७ आश्विनसौत्रामणीग्रहप्रचारः ।

अथाङ्गयागे पुनः—

१ आश्विनहविःप्रचारः
२ सारस्वतहविःप्रचारः
३ ऐन्द्रहविःप्रचारः
४ वनस्पतियागः
५ स्विष्टकृद्यागः
६ देवतानिगमः

अथ सौत्रामण्यङ्गतया त्रयो यागा विधीयन्ते—

१ ऐन्द्रपुरोडाशयागः
२ सावित्रपुरोडाशयागः
३ वारुणपुरोडाशयागश्चेति

अथानुयाजाः

१ सूक्तवाकः
२ सौत्रामण्यङ्गं पितृयज्ञः ।
३ आदित्येष्टिः

इति सौत्रामणीप्रयोगः समाप्तः ।

इत्थं चतुर्धा पशुबन्धपदार्था दर्शिताः ।

सोऽयं पशुबन्धयागः संवत्सरावयवयोरुत्तरायणदक्षिणायनयोः षाण्मासिकयो रुपक्रमे षाण्मासिकाग्निसंस्कारतया विधीयते ।

## अथाग्निष्टोमपदार्थानुक्रमणी भवति ।

पौर्विकबहिःकर्म, पौर्विकमन्तःकर्म, दीक्षा, सोमसंपत्तिः, प्रवर्ग्यम्, पशुः, ग्रहाः इति अष्टपर्वा ह्ययमग्निष्टोमः । तद्यथा—

१ पूर्वदिने नान्दीश्राद्धम्
२ रात्रावुदकशान्तिः
३ प्रतिसरबन्धश्च
४ आरम्भदिने यजमानपत्नीषोडशर्त्विजां स्नानादिपञ्चकम् ।
५ गार्हपत्यस्य पश्चाद्यजमानोपवेशः ।
६ विष्णुसंस्मरणम्
७ अग्निष्टोमसङ्कल्पः
८ सोमप्रवाकवरणम्

९ ऋत्विगाह्वानम्
१० ऋत्विग्वरणम्
११ शालाप्रवेशः
इति पौर्विकबहिःकर्माणि ॥ १ ॥

१ ऋत्विक्कर्तृकः शान्तिजपः
२ अध्वर्युकर्तृकं मन्थनम्
३ मनस्वतीहोमः
४ पूर्वशान्तिपाठः
५ प्रवर्ग्यसंभरणम्
६ उत्तरशान्तिपाठः
७ देवयजनाध्यवसायः
८ मानसहोमः
९ आहवनीये होमः
१० कूष्माण्डहोमः
११ उपस्थानं वरदानञ्च
१२ यूपाहुतिर्यूपाहरणञ्च
१३ व्रतभक्षणम्
इति पौर्विकाभ्यन्तःकर्माणि ॥ २ ॥

१ दीक्षाङ्गवपनादिसंस्काराः
२ दीक्षणीयेष्टिः
३ दीक्षाहुतयः
४ दीक्षोपवेशनम्
५ दीक्षाङ्गमेखलाबन्धनम्
६ दीक्षाङ्गपत्नीसंनहनम्
७ उष्णीषवेष्टनम्
८ कुम्बकुरीराध्यूहनम्
९ दीक्षाङ्गं कृष्णविषाणदण्डग्रहणम्
१० दीक्षितत्वज्ञापनम्
११ सनियाचनम्
१२ पत्नीयजमानव्रतपयःसाधनम्
१३ दीक्षाव्रतभ्रेषप्रायश्चित्तानि
१४ अग्न्यभिमुखशयनम्
१५ व्रताख्यपयोभक्षणम्
इति दीक्षाकर्माणि ॥ ३ ॥

अथ सोमक्रयातिथ्येष्टिभ्यां सोमसंपत्तिर्यथा—

१ सोमक्रयाहुतिः
२ सोमक्रयण्यनुमन्त्रणम्
३ सोमक्रयण्यनुगमनम्
४ पद्धरणीग्रहणम्
५ क्रयणाङ्गसोमोपस्थानम्
६ क्रयणाभिसर्शनम्
७ सोमविमानम्
८ सोमवेष्टनम्
९ सोमावेक्षणम्
१० सोमक्रयणम्
११ शकटे सोमस्थापनम्
१२ शकटपरिवहनम्
१३ शकटोपस्थानम्
१४ आतिथ्येष्टिः
१५ सोमासन्दीप्रतिष्ठापनम्
१६ अन्तरागमननिषेधः
१७ सोममधुपर्कः
इति सोमसंपत्तिः ॥ ४ ॥

अवान्तरदीक्षारौहिण—महावीरधर्मयागोपसद्यागवेदीसंस्कारोत्तरकर्म सप्ताङ्गं प्रवर्ग्यं यथा—

(१

१ तानूनप्त्राज्यग्रहणम्
२ तानूनप्त्रावमर्शनम्
३ तानूनप्त्रावघ्राणम्
४ मदन्तीपचनम्
५ सोमाप्यायनम्
६ द्यावापृथिवीनिह्नवः
७ अवान्तरदीक्षा
८ आहवनीयोपस्थानम्
९ यजमानशासनम्
१० शान्तिजपः

इत्यवान्तरदीक्षाकर्म्माणि ॥ १ ॥

११ प्रवर्ग्यसामग्रीसंपादनम्
१२ प्रवर्ग्यारम्भः
१३ प्रवर्ग्यपात्रसंभारप्रोक्षणम्
१४ रौहिणपुरोडाशश्रपणम्
१५ रौहिणपुरोडाशासादनम्

इति रौहिणम् ॥ २ ॥

१६ प्रवर्ग्यारम्भहोमः
१७ महावीराञ्जनम्
१८ रुक्मोपगूहनम्
१९ महावीरसादनम्
२० महावीराज्यपूरणम्
२१ महावीरप्रादेशकरणम्
२२ महावीराङ्गारपरिश्रयणम्
२३ महावीरदक्षिणतो वैकङ्कतपरिधि-
परिधानम्
२४ धर्मोपस्थानम्
२५ महावीरप्रदक्षिणगमनम्
२६ महावीराप्यायनम्
२७ महावीरप्रेक्षणम्
२८ घर्मोपस्थानम्

इति महावीरः ॥ ३ ॥

२९ प्रवर्ग्याङ्गगार्हपत्योपस्थानम्
३० दक्षिणरौहिणहोमः
३१ घर्मदुघादोहनम्
३२ महावीरे गोपयःप्रक्षेपः
३३ घर्मोष्मान्वीक्षणम्
३४ सिद्धवममहावीरग्रहणम्
३५ महावीरोत्थापनम्
३६ महावीरप्राङ्नयनम्
३७ घर्महोमार्थं दक्षिणात्याक्रमणम्
३८ घर्मयागः
३९ घर्मस्रावणम्
४० उद्वासनीये महावीरसादनम्
४१ शकलक्षारणम्
४२ शकलानुप्रहरणम्
४३ गार्हपत्यादिपरिषेचनम्
४४ उपयमनपर्य्यग्निकरणम्
४५ उपसादनाङ्गजपः
४६ प्रवर्ग्योत्तरप्रथमाहुतिहोमः
४७ पूर्वाहुत्यङ्गगार्हपत्यावेक्षणम्
४८ द्वितीयाहुतिहोमः
४९ कूर्चे लेपमार्जनम्
५० घर्मभक्षणम्
५१ प्रवर्ग्यप्रायश्चित्ताहुतिः
५२ घर्मोत्सादनम्
५३ शान्तिजपः

इति घर्मयागः ॥ ४ ॥

उपसद् यथा—

१ उपसदिष्टिः

उप

इति

२ उपसद्धोमः
३ त्रिस्तनव्रतप्रैषः
४ त्रिस्तनव्रतदोहनम्
५ द्विस्तनव्रतदोहनम्
६ मध्यमोपसद्धोमः

इत्युपसत् ॥ ५ ॥

१ महावेदिः
२ सौमिकी उत्तरवेदिः
३ उपरवाणां कालः
४ सौमिक उत्करः
५ स्तम्बयजुर्हरणम्
६ पाणिसंमर्शनादि—पशुवन्धवत् कर्म्माणि
७ वेदिकारप्रैषः
८ चात्वालपरिलेखः
९ उत्तरनाभिप्रच्छादनान्तं कर्म्म

इति वेदीसंस्कारः ।

१ प्रवर्ग्योद्वासनम्
२ प्रवर्ग्योत्तरशान्तिपाठः
३ परिघर्म्यपात्रसादनम्
४ इध्मप्रदीपनहोमः
५ महावेदिगमनम्
६ प्रचरणीयमहावीरपरिपूरणम्
७ घर्मपात्रोत्सादनार्थसादनम्
८ घर्मपात्राच्छादनम्
९ आसादितघर्म्मोपकरणोपस्थान
१० घर्मोद्वासनसाम
११ घर्मोपस्थानं यजमानेन
१२ अपां प्रक्षेपः । जलस्पर्शः
१३ आदित्योपस्थानम्
१४ गोत्रादेशः
१५ उत्तरशान्तिः
१६ शालामुखीयोपस्थानम्

इत्युत्तरकर्म ॥

## इत्यग्निष्टोमे प्रवर्ग्य कर्म्म संपूर्णम् ॥

महावेदिकरणं, हविर्धानसदोमार्जालीयाग्नीध्रीयनिर्माणं, खरनिर्म्माणम्, उपस्थाः वसतीवर्य्यादिसादनं, पाशुकप्राकृतम्=इत्यग्नोषोमीयपशुकर्म्माण्यष्टपर्वाणि । तद्यथा

(१) १ पूर्वाङ्गकर्म
२ महावेदीकरणम्
(२) ३ दक्षिणहविर्धानोत्तरवर्त्तनीहोमः
४ दक्षिणधूरञ्जनम्
५ उत्तरहविर्धानोत्तरवर्त्तनीहोमः
६ उत्तराक्षधूरञ्जनम्
७ हविर्धानप्रवर्तनम्
८ अनसोरुपस्तंभने स्थापनम्
९ मेध्यां हविर्धानवन्धनम्
१० हविर्धानगृहनिर्म्माणम्

(३) ११ औदुम्बर्यवटखननप्रैषः
१२ उपरवखननप्रैषः
१३ सदोनिर्म्माणम्
१४ सदोऽभिमर्शनम्
(४) १५ महावेद्या दक्षिणतो मार्जालं गृहम्
१६ उपरवसंस्काराः
१७ उपरवेषु फलकप्रतिष्ठापनम्
(५) १८ आग्नीध्रीयखरकरणम्
१९ होतृखरो=होतृधिष्ण्यम्

२० मैत्रावरुणधिष्ण्यं खरः
२१ ब्राह्मणाच्छंसिधिष्ण्यं खरः
२२ पोतृखरः
२३ नेष्टृधिष्ण्यं खरः
२४ अच्छावाकधिष्ण्यं खरः
२५ मार्जालीयधिष्ण्यं खरः
(६) २६ औत्तरवेदिकाग्न्युपस्थानम्
२७ आस्वावचात्वालयोरुपस्थानम्
२८ पशुश्रपणाग्न्युपस्थानम्
२९ सदसः पश्चिमद्वारे औदुम्बरी
३० ब्रह्मसदनोपस्थानम्
३१ शालामुखीयोपस्थानम्
३२ गार्हपत्याद्युपस्थानम्
३३ अध्वर्योः प्रत्यक् सदोऽतिक्रमण-निषेधः
३४ प्राग्वंशे पात्रासादनम्
३५ अग्नीषोमप्रणयनप्रैषः
३६ सोमोपस्थानम्
३७ आहवनीयोपस्थानम्
(७) ३८ वसतीवरीग्रहणम्
३९ वसतीवरीसादनम्
(८) ४० आज्येडान्तं निरूढपशुवत्
४१ उपयाजाः
४२ पुरोडाशयागः
४३ अङ्गयागः

इत्यग्नीषोमीयपशुः ॥

अथ प्रातः सवनमाध्यन्दिनसवनतृतीयसवनविधानभेदात् त्रेधा ग्रहस्तुत्याऽनुक्रम्यते—

१ बहिर्वेदिभवनम्
२ वसतीवरीस्थापनम्
३ सुत्यासामग्रीसंपादनप्रैषः
४ सौत्यं सायंदोहकरणम्
५ सौत्यसिध्माबर्हिः संभरणम्
६ सुब्रह्मण्याह्वानम्
७ सुत्यासङ्कल्पः
८ अम्भ्रणासादनम्
९ सुत्यार्थप्रबोधनम्
१० सुत्यारम्भप्रैषः
११ हविर्धाने वायव्यादि सादनम्
१२ आग्नीध्रीयादिपंचकसंमर्शनम्
१३ सौमिकपरिधिस्रुगभिमर्शनम्
१४ सोमराजोपावरोहणम्
१५ उद्गातृनिवेदनम्
१६ सवनीयपञ्चहोतृहोमः
१७ प्रातरनुवाकादिप्रैषः
१८ सौत्यपुरोडाशीयपात्रासादनम्
१९ पवित्रकरणादि
२० उत्तरवेदिसमीपे प्रणीतासादनम्
२१ अग्निहोत्रहवण्यादानादि
२२ सवनीयपुरोडाशनिर्वापः
२३ उभयोर्द्रव्ययोः प्रोक्षणम्
२४ कृष्णाजिनादानादि
२५ व्रीह्येकभागावघातः
२६ हविष्कृदाह्वानम्
२७ तन्दुलप्रक्षालननिनयनान्ते प्रातर्दोहः सवनीयः
२८ धानाकपालोपधानम्
२९ परिवापकपालोपधानम्

इत्यग्निष्टोमयज्ञस्य कर्मानुक्रमणी संपूर्णा ।

# अग्निचयनम् ।

गार्हपत्यो नैर्ऋत्यमाहवनीयोऽष्टौ धिष्ण्याश्चेत्येतेषामेकादशानामग्नीनां सोम-सम्बन्धिनां संस्कारविशेषोऽग्निचयनं नामातियज्ञः ॥ अन्तरेणाप्यग्निचयनं सोमः क्रियते । इच्छतस्तु स महाव्रते सोमेऽग्निचयनमावश्यकमाहुः ॥

स्वातन्त्र्येणाप्यग्निचयनमिच्छन्ति । तत्रेदं द्विविधं भवति—अध्वरकर्म्म चाऽग्नि-कर्म्म चेति ॥

तत्र प्रथमायां फाल्गुन्यां पश्वालम्भो, माघामावास्यायामिति केचित् । फाल्गुन्या अनन्तरायामष्टकायामुखासंभरणम् । ततोऽनन्तरायाममावास्यायां दीक्षा ॥

ततः संवत्सरं यावदुख्याग्निधारणविष्णुक्रमवात्सप्रादिकर्म्माणि । संवत्सरान्ते फाल्गुन्या अनन्तरायममावास्यायां सोमक्रयः । सोमक्रयात् प्रागेव गार्हपत्यचयनम् ॥

सोमक्रयादूर्ध्वं चैत्रशुक्लेऽन्तरोपसदावाहवनीयचयनम् । ततः शतरुद्रियहोमः । अग्निविकर्षणम्, प्रवर्ग्योत्सादनम्, वसोर्धारा, यजमानाभिषेको, धिष्ण्याग्निचयनं, पयस्या इत्येतावानयमत्र कर्म्मक्रमः ॥

**इति मधुसूदनविद्यावाचस्पतिप्रणीतः**

**कर्म्मानुक्रमणिकाध्यायः समाप्तः ॥**